॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

## भ्वादयः

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण




संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।


**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी


इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।




YouTube संस्कृतसारः @sanskrit sar


**प्रस्तोता**

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,



श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री 'संस्कृतव्याकरण' में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु 'संस्कृतसारः' इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन 'लघुसिद्धान्तकौमुदी' स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।

सूचना— यह अध्ययन सामग्री पूर्णतः निश्शुल्क है तथा इस पर कोई कॉपीराइट भी नहीं हैं। हमारे द्वारा निर्मित इसी प्रकार की अन्य शिक्षण समग्री को हमारे इस अकाउंट https://archive.org/details/@sanskrit_sar से डाउनलोड करें।

दिनाङ्कः-

10.10.2021

अस्माकं सम्पर्कसूत्राणि—
e-mail अणुवाक्— samskritsaarah@gmail.com
YOUTUBE — संस्कृतसारः @sanskrit sar
FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# धातुप्रकरणे धातोः प्रकाराः प्रकरणनिरूपणञ्च

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

## 1.औपदेशिक-धातुप्रकरणानि

1. भ्वादयः
2. अदादयः
3. जुहोत्यादयः
4. दिवादयः
5. स्वादयः
6. तुदादयः
7. रुधादयः
8. तनादयः
9. क्र्यादयः
10. चुरादयः

## 2.आतिदेशिक-धातुप्रकरणानि

11. ण्यन्तप्रक्रिया
12. सन्नन्तप्रक्रिया
13. यङन्तप्रक्रिया
14. यङ्लुक्प्रक्रिया
15. नामधातवः
16. कण्ड्वादयः

## 3.सौत्रधातवः—

येषां धातूनाम् उच्चारणं पाणिनिना सूत्र एव कृतम्।

## धातूनां पदव्यवस्था

17. आत्मनेपदप्रक्रिया
18. परस्मैपदप्रक्रिया

## भावे कर्मणि च प्रत्ययः

19. भावकर्मप्रक्रिया

20. कर्मकर्तृप्रक्रिया
21. लकारार्थप्रक्रिया

॥ इति तिङन्तप्रकरणम् ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# रूपाणां विभेदपरिज्ञानार्थं गणव्यवस्था विकरणव्यवस्था च

## लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
|---|---|---|---|---|---|---|---|---|---|
| भ्वादयः | अदादयः | जुहोत्यादयः | दिवादयः | स्वादयः | तुदादयः | रुधादयः | तनादयः | क्र्यादयः | चुरादयः |
| भू+शप्+ति | अद्+लुक्+ति | हु+श्लु+ति | दिव्+श्यन्+ति | सु+श्नु+ति | तुद्+श+ति | रुध्+श्नम्+ति | तन्+उ+ति | क्री+श्ना+ति | चुर्+णिच्+शप्+ति |
| भवति | अत्ति | जुहोति | दीव्यति | सुनोति | तुदति | रुणद्धि | तनोति | क्रीणाति | चोरयति |

(विकरणप्रत्ययाः) {तत्र शप्-सामान्यः}

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| शप् | लुक् | श्लु | श्यन् | श्नु | श | श्नम् | उ | श्ना | शप् |
| अ | × | × | य | नु | अ | न | उ | ना | अ |

भूवादौ शबदादिकेषु लुगपि, श्लुः स्याज्जुहोत्यादिषु, श्यन् दैवादिकधातुषु, श्नुरपि च स्वादौ, तुदादौ च शः।
रुध्यादौ श्नमथो तनादिषु भवेदुप्रत्ययः, क्र्यादिषु श्ना स्यात्, स्वार्थिकणिच्चुरादिषु, पुनस्तत्रापि शब्जायते॥

(प्रक्रियासर्वस्वे— भट्टनारायणः)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# कर्त्ता भावः कर्म इत्यादीनां परिज्ञानम्

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

**कर्त्ता—** व्यापाराश्रयः कर्त्ता भवति।
**व्यापारः/ भावः/ क्रिया —** फलसिद्धये यत् चेष्टादिकं भवति सा क्रिया।
**कर्म—** फलाश्रयः कर्म भवति।
**फलम्—** यस्य उद्देश्यस्य सिद्धये क्रियारम्भः तत् फलम्।

लँट्, लिँट्, लुँट्, लृँट्, लेँट्, लोँट्, लँङ्, लिँङ्, लुँङ्, लृँङ्।
एषु पञ्चमो लकारश्छन्दोमात्रगोचरः॥

गम्-धातोः फलम्— देशान्तरसंयोगः (नगरे)।
गम्-धातोः व्यापारः — कर-चरणादिचालनम्।

पच्-धातोः फलम्— विक्लित्ति (गल जाना) इत्यादि।
पच्-धातोः व्यापारः — पात्राधिश्रयण-अग्निर्ज्वलनादिः।




प्रतिभा ओदनं पचति।




हरिः नगरं गच्छति

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सकर्मकाकर्मकविवेचनपूर्वकं लकाराणाम् अर्थनिरूपणम्

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

छिद्-धातोः फलम्— पृथग्-भवनम्।
छिद्-धातोः व्यापारः — कुठारेण हस्तचालनादिरूपः।



**सूत्रम्**— लः कर्मणि च भावे चाकर्मकेभ्यः॥ (३,४.६९)
**अर्थः**— लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च॥

लज्जा-सत्ता-स्थिति-जागरणे,
वृद्धि-क्षय-भय-जीवन-मरणे।
नर्तन-निद्रा-रोदन-वासे,
स्पर्धा-कम्पन-मोदन-हासे।
शयन-क्रीडा-रुचि-दीप्त्यादा-
वर्थेऽकर्मकधातव उक्ताः॥

निद्रा-धातोः फलम्— विश्रमजन्य-नवीभावप्रतिपत्तिः।
निद्रा-धातोः व्यापारः — विषयेभ्यो मनोव्यावर्तनम्।



**धातुः**

- **सकर्मकः**
  - कर्तृ-वाच्यः
  - कर्म-वाच्यः
  - यत्र व्यापारः फलञ्च भिन्नं भिन्नं द्रव्यमाश्रित्य अवतिष्ठते।
  - ‘किम्’ इत्याकाङ्क्षात्वम्।
  - दुष्टो वृक्षं छिनत्ति।
- **अकर्मकः**
  - कर्तृ-वाच्यः
  - भाव-वाच्यः
  - यत्र व्यापारः फलञ्च एकमेव द्रव्यमाश्रित्य अवतिष्ठते।
  - ‘किम्’ इत्याकाङ्क्षारहितत्वम्।
  - शिशुः निद्राति।

# वर्त्तमानत्वनिरूपणम्



- क्रियायाः प्रारम्भतः समाप्तिपर्यन्तः कालो वर्त्तमानः।
- प्रारम्भसमाप्ती अभिव्याप्य वृत्तिमान् कालो वर्त्तमानः।
- प्रारब्धापरिसमाप्तिक्रियाश्रयत्वं वर्त्तमानत्वम्।

**सूत्रम्**— **वर्त्तमाने लँट्॥ (३,२.१२३)**

**अर्थः**— वर्त्तमानक्रिया-वृत्तेर्धातोर्लँट् स्यात् (कर्तृ-कर्म-भावेषु)।

अटावितौ। उच्चारणसामर्थ्याल्लस्य नेत्वम्।

भू सत्तायाम्॥ १॥ कर्तृ-विवक्षायां भू ल् इति स्थिते –

भू+ लँट् (अटावितौ)
भू+ ल्

३ मासाः
६ मासाः
१ वर्षम्

मेघा लघुसिद्धान्तकौमुदीम् अधीते।

मेघा लघुसिद्धान्तकौमुदीम् अधीते।

मेघा लघुसिद्धान्तकौमुदीम् अधीते।



संस्कृतसार:
छिद्यन्ते सर्वसंशयाः

# लादेशाः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

## परस्मैपदम्

| पुरुषः ↓ | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | ❖ तिप् (ति) | तस् | झि |
| मध्यमः | ❖ सिप् (सि) | थस् | थ |
| उत्तमः | ❖ मिप् (मि) | वस् | मस् |

## आत्मनेपदम्

| पुरुषः ↓ | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | त | आताम् | झ |
| मध्यमः | थास् | आथाम् | ध्वम् |
| उत्तमः | इट् (इ) | वहि | महिङ् (महि) |

❖ पित्-प्रत्ययाः

❖ पित्-भिन्न-प्रत्ययाः/ अपित्-प्रत्ययाः

अपित् सार्वधातुक-प्रत्ययाः ङिद्वत् स्युः।

सूत्रम्— तिप्तस्झिसिप्थस्थमिब्वस्मस्ताताञ्झथासाथांध्वमिड्वहिमहिङ् (३,४.७८)

अर्थः— एतेऽष्टादश लादेशाः स्युः॥

सूत्रम्— लः परस्मैपदम् (१,४.९९)

अर्थः— लादेशाः परस्मैपद संज्ञाः स्युः॥

सूत्रम्— तङानावात्मनेपदम् (१,४.१००)

अर्थः— तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः। पूर्वसंज्ञापवादः॥

सूत्रम्— तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः (१,४.१०१)

अर्थः— तिङ उभयोः पदयोस्त्रिकाः क्रमादेतत्संज्ञाः स्युः॥

सूत्रम्— तान्येकवचनद्विवचनबहुवचनान्येकशः॥ (१,४.१०२)

अर्थः— लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादि संज्ञानि स्युः॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पदव्यवस्था



## आत्मनेपदम्

अनुदात्तेतो धातवः— एधँ वृद्धौ, यतीँ प्रयत्ने इत्यादयः।
ङितो धातवः— शीङ् स्वप्ने, षूङ् प्राणिप्रसवे इत्यादयः।

## उभयपदम्

स्वरित्तेतो धातवः— यजँ देवपूजासङ्गतिकरणदानेषु, डुपचँष् पाके इत्यादयः।
ञितो धातवः— डुकृञ् करणे, हृञ् हरणे इत्यादयः।

## परस्मैपदम्

उदात्तेतो धातवः— अद भक्षणे इत्यादयः।
निरनुबन्धा धातवः— भू सत्तायाम्।

सूत्रम्— अनुदात्तङित आत्मनेपदम्॥ (१,३.१२)

अर्थः— 1.अनुदात्तेतो= अनुदात्त-स्वर-इत्सञ्ज्ञकः 2.ङितश्च= ङकारेत्सञ्ज्ञकश्च (ङिदन्तस्य) धातोरात्मनेपदं= आत्मनेपदसञ्ज्ञकं (त, आताम्, झ इत्यादिकं) स्यात्॥

सूत्रम्— स्वरितञितः कर्त्रभिप्राये क्रियाफले॥ (१,३.७२)

अर्थः— 3.स्वरितेतो = स्वरित-स्वर-इत्सञ्ज्ञकः 4.ञितश्च= ञकारेत्सञ्ज्ञकश्च धातोरात्मनेपदं स्यात् कर्तृगामिनिक्रियाफले= यदा क्रियायाः फलस्य प्राप्तिः कर्त्तारं स्यात्॥

सूत्रम्— शेषात्कर्त्तरि परस्मैपदम्॥ (१,३.७८)

अर्थः— आत्मनेपद-निमित्त-हीनाद्धातोः कर्तरि= कर्त्ता- अर्थे परस्मैपदं = परस्मैपदसञ्ज्ञकं (तिप्, तस्, झि इत्यादिकं) स्यात्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# प्रथम-मध्यम-उत्तमपुरुषव्यवस्था

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

सूत्रम्— युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः (१,४.१०५)
अर्थः— तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः॥
सूत्रम्— अस्मद्युत्तमः (१,४.१०७)
अर्थः— तथाभूतेऽस्मद्युत्तमः॥
सूत्रम्— शेषे प्रथमः (१,४.१०८)
अर्थः— मध्यमोत्तमयोरविषये प्रथमः स्यात्। भू ति इति जाते॥

तिङ्वाच्यम्= तिबादीनामर्थः यत् कारकम्= कर्त्ता कर्म च तद्वाचके युष्मच्छब्दे प्रयुज्यमाने= प्रयोक्तव्ये अप्रयुज्यमाने= विवक्षामात्रे सति च मध्यमः= सिप्,थस्,थ, थास् (से), आथाम्,ध्वम्, मध्यमपुरुषसञ्ज्ञका एते प्रत्ययाः स्युः ॥

तिङ् = तिबादय अष्टादश प्रत्ययाः।
वाचकः/ वाची = शब्दः।
वाच्यः= अर्थः।
कारकः= कर्त्ता कर्मादयः षट्।
स्थानी/ प्रयुज्यमाने= प्रयोगे कर्त्तव्ये।
उपपदम् = समीपोच्चारितं पदम्।
समानाधिकरणम्= एकम् अधिकरणम्= आधारः

'उपपदे' इत्यस्य फलम्—
त्वं वनं गच्छसि।
त्वं गच्छसि वनं।
वनं गच्छसि त्वम्।

'अप्रयुज्यमाने' इत्यस्य फलम्—
वनं गच्छसि।



संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लँट्लकारस्य प्रक्रिया



भू+ लँट्
भू+ ल्
भू+ तिप्
भू+ ति
भू शप् + ति
भू अ + ति
भो अ + ति

| | | |
|---|---|---|
| भ् अव् अ + ति<br>**भवति** | भ् अव् अ + तस्<br>**भवतः** | भ् अव् अ + झि<br>भ् अव् अ + अन्त् इ<br>भ् अव् + अ न्त् इ<br>**भवन्ति** |
| भ् अव् अ + सि<br>**भवसि** | भ् अव् अ+ थस्<br>**भवथः** | भ् अव् अ+ थ<br>**भवथ** |
| भ् अव् अ + मि<br>भ् अव् आ + मि<br>**भवामि** | भ् अव् अ + वस्<br>भ् अव् आ + वस्<br>**भवावः** | भ् अव् अ + मस्<br>भ् अव् आ + मस्<br>**भवामः** |

**सूत्रम्— तिङ्-शित्सार्वधातुकम्॥ (३,४.११३)**
अर्थः— तिङः= तिबादय अष्टादशप्रत्ययाः शितश्च= शप्-श्यन्-श्नु इत्यादयः धात्वधिकारोक्ता एतत्संज्ञाः स्युः॥

**सूत्रम्— कर्तरि शप्॥ (३,१.६८)**
अर्थः— कर्त्रर्थे सार्वधातुके परे धातोः शप्॥

**सूत्रम्— सार्वधातुकार्धधातुकयोः॥ (७,३.८४)**
अर्थः— अनयोः परयोरिगन्ताङ्गस्य गुणः। अवादेशः। भवति। भवतः॥

**सूत्रम्— झोऽन्तः॥ (७,१.३)**
अर्थः— प्रत्ययावयवस्य झस्यान्तादेशः। अतो गुणे। भवन्ति। भवसि। भवथः। भवथ॥

**सूत्रम्— अतो दीर्घो यञि॥ (७,३.१०१)**
अर्थः— अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके। भवामि। भवावः। भवामः। स भवति। तौ भवतः। ते भवन्ति। त्वं भवसि। युवां भवथः। यूयं भवथ। अहं भवामि। आवां भवावः। वयं भवामः॥

संस्कृतसारः

# लिँट्लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

**भूतम्—**
अतीतः कालः भूतकालः।
वर्त्तमानध्वंसप्रतियोगिकालवृत्तित्वम्।

**अद्यतनः—**
अद्य (24:00 वादनात्मकः कालः) भवः।

**परोक्षम्—**
प्रयोक्तुर् इन्द्रिय-अगोचरत्वम्।




| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | ❖ तिप् णल्(अ) | तस् अतुस् | झि उस् |
| मध्यमः | ❖ सिप् थल् (थ) | थस् अथुस् | थ अ |
| उत्तमः | ❖ मिप् णल् (अ) | वस् व | मस् म |

**रामो रावणं जघान।**



**सूत्रम्— परोक्षे लिँट् (३,२.११५)**
**अर्थः—** भूतानद्यतन-परोक्षार्थवृत्तेर् धातोर्लिँट् स्यात्। लस्य तिबादयः।
**सूत्रम्— परस्मैपदानां णलतुसुस्थलथुसणल्वमाः।**
**अर्थः—** लिँटस्तिबादीनां नवानां णलादयः स्युः।
भू अ इति स्थिते –

भू+ लिँट्
भू+ ल्
भू+ तिप्
भू+ णल्

**या क्रिया वक्त्रा स्वयं न प्रत्यक्षीकृता तादृश्यामेव भूतकालिकक्रियायां लिँट्लकारस्य प्रयोगः।**

# लिँट्लकारस्य प्रक्रिया



## धातु

हलादि-एकाचः— गम्, भू
अजादि-एकाचः— अत्
हलादि-अनेकाचः— चकास्

प्रथमैकाचो द्वित्वम्

अजादि-अनेकाचः— ऊर्णु

द्वितीयैकाचो द्वित्वम्

अभ्यासः

भू+ लिँट्
भू+ ल्
भू+ तिप्
भू+ णल्
भू+ अ
भू वुक् + अ
भू व् + अ

भूव् भूव् + अ
भू भूव् + अ
भु भूव् + अ
भ भूव् + अ
ब भूव् + अ
**बभूव**

**सूत्रम्— भुवो वुँग्लुँङ्लिँटोः (६,४.८८)**
अर्थः— भुवो वुँगागमः स्यात् लुँङ्लिँटोरचि॥
**सूत्रम्— लिँटि धातोरनभ्यासस्य (६,१.८)**
अर्थः— लिँटि परेऽनभ्यासधात्ववयस्यैकाचः प्रथमस्य द्वे स्त, आदिभूतादचः परस्य तु द्वितीयस्य। भूव् भूव् अ इति स्थिते –
**सूत्रम्— पूर्वोऽभ्यासः (६,१.४)**
अर्थः— अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससञ्ज्ञः स्यात्॥
**सूत्रम्— हलादिः शेषः (७,४.६०)**
अर्थः— अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते। इति वलोपः॥
**सूत्रम्— ह्रस्वः (७,४.५९)**
अर्थः— अभ्यासस्याचो ह्रस्वः स्यात्॥
**सूत्रम्— भवतेरः (७,४.७३)**
अर्थः— भवतेरभ्यासोकारस्य अः स्याल्लिँटि॥

# अभ्यासे जश्त्व-चर्त्वसन्धेर्विवेकः



स्थानिनः— झल्

आदेशाः— जश्, चर्

| | | | |
|---|---|---|---|
| क् | ख् | ग् | घ् |
| च् | छ् | ज् | झ् |
| ट् | ठ् | ड् | ढ् |
| त् | थ् | द् | ध् |
| प् | फ् | ब् | भ् |

खय् — झश्

श् ष् स् ह्

| | |
|---|---|
| ग् (कण्ठ-संवार-नाद-घोषः) | क् (कण्ठ-विवार-श्वास-अघोषः) |
| ज् (तालु) | च् (तालु) |
| ड् (मूर्धा) | ट् (मूर्धा) |
| द् (दन्त्यः) | त् (दन्त्यः) |
| ब् (ओष्ठौ) | प् (ओष्ठौ) |

1-2 का 1
3-4 का 3

सारांशः— अभ्यासे वर्गस्य प्रथमद्वितीययोः प्रथमः, तृतीय-चतुर्थयोः वर्गस्य तृतीयो भवति।

सूत्रम्— अभ्यासे चर्च (८,४.५४)
अर्थः— अभ्यासे झलां चरः स्युर्जशश्च। झशां जशः खयां चर इति विवेकः।
बभूव। बभूवतुः। बभूवुः॥

संस्कृतसारः
छिन्धन्ते सर्वसंशयाः

# लिँट्लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

भू+ लिँट्
भू+ ल्
भू+ तिप्
भू+ णल्
भू+ अ
भू वुक् + अ
भू व् + अ
भूव् भूव् + अ
भू भूव् + अ
भु भूव् + अ
भ भूव् + अ
ब भूव् + अ

**बभूव**

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | ❖ तिप्<br>णल्(अ)<br>बभूव्+ अ= बभूव | तस्<br>अतुस्<br>बभूव्+ अतुस्= बभूवतुः | झि<br>उस्<br>बभूव्+ उस्= बभूवुः |
| मध्यमः | ❖ सिप्<br>थल् (थ)<br>बभूव्+ इथ= बभूविथ | थस्<br>अथुस्<br>बभूव्+ अथुस्= बभूवथुः | थ<br>अ<br>बभूव्+ अ= बभूव |
| उत्तमः | ❖ मिप्<br>णल् (अ)<br>बभूव्+ अ= बभूव | वस्<br>व<br>बभूव्+ इव= बभूविव | मस्<br>म<br>बभूव्+ इम= बभूविम |

ब भूव् + इ थ
**बभूविथ**

सूत्रम्— लिँट् च (३,४.११५)
अर्थः— लिँडादेशस्तिङ्ङार्धधातुकसंज्ञः॥
सूत्रम्— आर्धधातुकस्येड्वलादेः (७,२.३५)
अर्थः— वलादेरार्धधातुकस्येडागमः स्यात्। बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लुँट्लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

**भविष्यः—**
आगामी कालो भविष्यः।



**अनद्यतनः—**
अद्य (24:00 वादनात्मकः कालः) भवोऽद्यतनः। एतद्भिन्नोऽनद्यतनः।

स्य— लृँ= लृँङ्, लृँट्
तासी = लुँट्

लँट्, लिँट्, लुँट्, लृँट्, लेँट्, लोँट्,
लँङ्, लिँङ्, लुँङ्, लृँङ् ।

| प्रथमः | ❖ तिप्> डा (आ) | तस्> रौ | झि> रस् |
|---|---|---|---|

क्रियाया अनद्यतनत्वद्योतकं पदं यदा वाक्ये आगच्छति तदा लुँट्लकार एव प्रयोक्तव्यः। यथा— रामः श्वः/परश्वः/ अग्रिमसप्ताहे/वर्षे विद्यालयं गन्ता।
रामः विद्यालयं गमिष्यति। राम अद्य श्वो वा विद्यालयं गमिष्यति। कल्की धर्मपालको भविष्यति।

भू+ लुँट्
भू+ ल्
भू तास्+ ति
भू इ तास्+ ति

भो इ तास्+ ति
भ् अव् इ तास्+ ति
भवितास्+ डा
भवितास्+ आ

भवित्+ आ
**भविता**

**सूत्रम्— अनद्यतने लुँट् (३,३.१५)**
**अर्थः—** भविष्यत्यनद्यतनेऽर्थे धातोर्लुँट् स्यात्॥

**सूत्रम्— स्य-तासी लृँ-लुँटोः (३,१.३३)**
**अर्थः—** धातोः 'स्य-तासि' एतौ प्रत्ययौ स्तः, लृँलुँटोः परतः। शबाद्यपवादः। 'लृँ' इति लृँङ्-लृँटोर्ग्रहणम्।

**सूत्रम्— आर्धधातुकं शेषः (२,४.११४)**
**अर्थः—** तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात्। इट्॥

**सूत्रम्— लुँटः प्रथमस्य डा-रौ-रसः (२,४.८५)**
**अर्थः—** डा-रौ-रस् एते क्रमात्स्युः। डित्वसामर्थ्याद् अभस्यापि टेर्लोपः। भविता॥

'टेः' इति सूत्रेण डिति भस्य टेर्लोपो भवति। किन्तु तिङादिप्रत्ययानां भसञ्ज्ञा न भवितुं शक्यते इति जानन्नपि पाणिनिः 'डा' इत्यस्य डित् करोति, तेन ज्ञायते यदत्र भसञ्ज्ञां विनापि टेर्लोपो भवति।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लुँट्लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | तिप् भवितास् + आ= भविता | तस् भवितास् + रौ= भवितारौ | झि भवितास् + रस्= भवितारः |
| मध्यमः | सिप् भवितास् + सि= भवितासि | थस् भवितास् + थस्= भवितास्थः | थ भवितास् + थ= भवितास्थ |
| उत्तमः | मिप् भवितास् + मि= भवितास्मि | वस् भवितास् + वस्= भवितास्वः | मस् भवितास् + मस्= भवितास्मः |

## सकार-लोपविधायकं सूत्रद्वयम्

सूत्रम्— तासस्त्योर्लोपः (७,४.५०)

अर्थः— तासेरस्तेश्च सस्य लोपस्स्यात् सादौ प्रत्यये परे।

सूत्रम्— रि च (७,४.५१)

अर्थः— रादौ प्रत्यये तथा।

भवितारौ। भवितारः। भवितासि। भवितास्थः।

भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लृँट्लकारस्य प्रक्रिया



| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | भविष्य + तिप् = भविष्यति | भविष्य + तस् = भविष्यतः | भविष्य + अन्ति = भविष्यन्ति |
| मध्यमः | भविष्य + सिप् = भविष्यसि | भविष्य + थस् = भविष्यथः | भविष्य + थ = भविष्यथ |
| उत्तमः | भविष्य + मिप् = भविष्यामि (अतो दीर्घो यञि) | भविष्य + वस् = भविष्यावः (अतो दीर्घो यञि) | भविष्य + मस् = भविष्यामः (अतो दीर्घो यञि) |

**सूत्रम्—** लृँट् शेषे च॥ (३,३.१३)

**अर्थः—** भविष्यदर्थाद्धातोर् लृँट् (स्यात्) क्रियार्थायां क्रियायां सत्याम्= विद्यमानायाम् असत्यां वा। स्यः। इट्। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः।

भू+ लृँट्
भू+ ल्
भू स्य + ति
भू इ स्य + ति
भो इ स्य + ति
भव् इ स्य + ति
भव् इ ष्य + ति= **भविष्यति**

**सामान्य-भविष्यदर्थे लृँट्**

❖ **क्रियार्थायां क्रियायां सत्याम्**
✓ सः पठिष्यति इति गच्छति।
✓ सः पठितुं गच्छति। (तुमुँन्— भावे)
✓ सः पाठको गच्छति। (ण्वुल्— कर्त्तरि)

❖ **क्रियार्थायां क्रियायाम् असत्याम्**
✓ अहं पठिष्यामि।

यदा एकां क्रियां निष्पादयितुं या अन्या क्रिया क्रियते सा क्रिया **क्रियार्थाक्रिया** भवति।
यथा— सः काशीं पठितुं गच्छति इत्यत्र पठनार्थं या गमनक्रिया सैवोच्यते क्रियार्था क्रिया।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लोँट्लकारस्य प्रक्रिया



**सूत्रम्— लोँट् च (३,३.१६२)**

**अर्थः—** विध्याद्यर्थेषु= विधि-निमन्त्रणामन्त्रणाधीष्ट-संप्रश्न-प्रार्थनेषु धातोर्लोँट्॥

**सूत्रम्— आशिषि लिँङ्लोँटौ (३,३.१७३)**

**अर्थः—** (आशिष्यपि लिँङ्लोँटौ भवतः॥)

**सूत्रम्— एरुः (३,४.८६)**

**अर्थः—** लोँट इकारस्य उः स्यात्। भवतु॥

**सूत्रम्— तुह्योस्तातँङ्ङाशिष्यन्यतरस्याम् (७,१.३५)**

**अर्थः—** आशिषि= इष्टस्य प्राप्तिरिच्छायां तुह्योस्तातँङ् वा। परत्वात्सर्वादेशः। भवतात्॥

भू+ लोँट्
भू+ ल्
भू+ तिप्
भू+ ति
भू शप् + ति
भू अ + ति
भो अ + ति
भ् अव् अ + ति
**भवति**
**1.भवतु**
**2.भवतात्**

परत्वात्सर्वादेशः— तु-ह्योः स्थाने तातङ् विधीयते। अत्रायं प्रश्नो यत् 'ङिच्च'-१.१.५३ इति सूत्रं 'अनेकालशित्सर्वस्य-१.१.५५' इति सूत्रस्य अपवादसूत्रं वर्त्तते। अपवादसूत्रं हि परसूत्रस्यापेक्षया 'परनित्यान्तरङ्गापवादानाम् उत्तरोत्तरं बलीयः' इति परिभाषया तातङादेशः तु-ह्यो उकार-इकारयोः स्थाने स्यात् तर्हि कथं मूले लिखितं परत्वात्सर्वादेश इति।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लोँट्लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
| --- | --- | --- | --- |
| प्रथमः | तिप् | तस् (ताम्) | झि |
| मध्यमः | सिप् | थस् (तम्) | थ (त) |
| उत्तमः | मिप् (अम्) | वस् | मस् |

भू+ लोँट्
भू+ ल्
भू+ तस्
भू+ ताम्
भू शप् + ताम्
भू अ + ताम्
भो अ + ताम्
भव् अ + ताम्
**भवताम्**

भू+ सिप्
भू अ + हि (अपित्)
भव + ~~हि~~
**1.भव**
**2.भवतात्**

भव+ थस्
भव+ तम्
**भवतम्**

भू+ मिप्
भू अ + मि
भव + नि
भव + आट् नि (पित्)
भव + आ नि
**भवानि**

**सूत्रम्— लोँटो लँङ्वत् (३,४.८५)**
**अर्थः**— लोँटस्तामादयस्सलोपश्च॥

**सूत्रम्— तस्थस्थमिपां तांतंताम: (३,४.१०१)**
**अर्थः**— ङितश्चतुर्णां तामादयः क्रमात्स्युः। भवताम्। भवन्तु॥

**सूत्रम्— सेर्ह्यपिच्च (३,४.८७)**
**अर्थः**— लोँटः सेर्हिः सोऽपिच्च॥

**सूत्रम्— अतो हेः (६,४.१०५)**
**अर्थः**— अतः परस्य हेर्लुक्। भव। भवतात्। भवतम्। भवत।

**सूत्रम्— मेर्निः (३,४.८९)**
**अर्थः**— लोँटो मेर्निः स्यात्॥

**सूत्रम्— आडुत्तमस्य पिच्च (३,४.९२)**
**अर्थः**— लोँडुत्तमस्याट् स्यात् पिच्च। हिन्योरुत्वं न, इकारोच्चारण सामर्थ्यात्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लोँट्लकारस्य प्रक्रिया



**सूत्रम्— ते प्राग्धातोः (१,४.८०)**
अर्थः— ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः॥

**सूत्रम्— आनि लोँट् (८,४.१६)**
अर्थः— उपसर्गस्थान्निमित्तात्परस्य लोँडादेशस्यानीत्यस्य नस्य णः स्यात्। प्रभवाणि।

वार्त्तिकम्— (दुरः षत्व-णत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः) दुःस्थितिः। दुर्भवानि।
अर्थः— यत्र षत्वं णत्वं च कर्त्तव्यस्ति तत्र 'दुर्' इत्यस्योपसर्गत्वं नाङ्गीक्रियते।

वार्त्तिकम्— (अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्) अन्तर्भवाणि॥
अर्थः— अङ्विधौ किविधौ णत्वे च कर्त्तव्ये 'अन्तर्' इत्यस्योपसर्गत्वमङ्गीक्रियते।

**सूत्रम्— नित्यं ङितः (३,४.९९)**
अर्थः— सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः। अलोऽन्त्यस्येति सलोपः। भवाव। भवाम।

समानपदत्वाभावाद् अट्कुप्वाङ्... इत्यनेन अप्राप्तौ—

**प्र + भवानि**
**प्रभवाणि**

भव+ वस्
भव+ आ वस्
**भवाव**

अङ्विधौ— अन्तर्धा, 'आतश्चोपसर्गे'
किविधौ— अन्तर्धिः,'उपसर्गे घोः किः'
णत्वे— अन्तर्भवाणि।

परस्मैपदे लौट्स्थानिकप्रत्ययानां स्थितिः—

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | तु, तात् | ताम् | अन्तु |
| मध्यमः | हि/× तात् | तम् | त |
| उत्तमः | आनि | आव | आम |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लँङ्लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

भू+ लँङ्
भू+ ल्
भू+ तिप्
भू+ ति
भू शप् + ति
भू अ + ति
भो अ + ति
भव् अ + ति
भवति
अभवति
**अभवत्**

अभव+ तस्
अभव+ ताम्
अभवताम्

बीत गया सो भूत है, बीत रहा वर्त्तमान।
बीतेगा जो भविष्य है, तीनों काल पहचान॥

अनद्यतनः— अद्य (24:00 वादनात्मकः कालः) भवोऽद्यतनः। एतद्भिन्नोऽनद्यतनः।

भूतम्— अतीतः कालः भूतकालः। वर्त्तमानध्वंसप्रतियोगिकालवृत्तित्वम्। (त्वत्पुत्रः ह्यः अभवत्।)



परस्मैपदे लँङ्स्थानिकप्रत्ययानां स्थितिः—

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | त् | ताम् | अन् |
| मध्यमः | स् | तम् | त |
| उत्तमः | अम् | व | म |

सूत्रम्— अनद्यतने लँङ् (३,२.१११)
अर्थः— अनद्यतन-भूतार्थ-वृत्तेर्धातोर् लँङ् स्यात्॥
सूत्रम्— लुँङ्-लँङ्-लृँङ्क्ष्वडुदात्तः (लुँङ्-लँङ्-लृँङ्क्षु अट् उदात्तः)
अर्थः— एषु= लुँङ्-लँङ्-लृँङ्क्षु लकारेषु अङ्गस्य = अङ्गसञ्ज्ञकस्य/ प्रकृतेः अट् (आगमः स्यात्॥)
सूत्रम्— इतश्च (३,४.१००)
अर्थः— ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः।
अभवत्। अभवताम्। अभवन्। अभवः। अभवतम्। अभवत। अभवम्। अभवाव। अभवाम॥

भव+ झि
भव+ अन्ति (अतो गुणे)
अभव+न्त् (संयोगान्तस्य लोपः)
अभवन्

भव+ सि
अभव+ सि
अभव+ स्
अभवः

भव+ मिप्
अभव+अम्- अमि पूर्वः
अभवम्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# विधिलिँङ्लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

भू+ लिँङ्
भू+ ल्
भू+ तिप्
भू+ ति
भू शप् + ति
भू अ + यास् ति
भो अ +इय् ति
भव + इ त्
भवे + त्
**भवेत्**

भव+ तस्
भव+यास् ताम्
भव+इ(य्) ताम्
**भवेताम्**

परस्मैपदे विधिलिँङ्स्थानिकप्रत्ययानां स्थितिः—

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | ए त् | एताम् | ए य् उस् |
| मध्यमः | एः | ए तम् | ए त |
| उत्तमः | ए य् अम् | ए व | ए म |

भव+ झि
भव + यास् उस्
भव+इय् उस्
**भवेयुः**

भव+ सिप्
भव+यास् स्
भव+इ(य्) स्
**भवेः**

भव+ मिप्
भव + यास् अम्
भव+इय् अम्=**भवेयम्**

**सूत्रम्— विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिँङ्** (३,३.१६१)
**अर्थः—** एष्वर्थेषु धातोर्लिँङ्॥

**सूत्रम्— यासुँट् परस्मैपदेषूदात्तो ङिच्च** (३,४.१०३)
**अर्थः—** लिँङः परस्मैपदानां यासुँडागमो ङिच्च॥

**सूत्रम्— लिँङः सलोपोऽनन्त्यस्य** (७,२.७९)
**अर्थः—** सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः। इति प्राप्ते—

**सूत्रम्— अतो येयः** (७,२.८०)
**अर्थः—** अतः परस्य सार्वधातुकावयवस्य 'यास्' इत्यस्य इय्। गुणः॥

**सूत्रम्— लोपो व्योर्वलि** (६,१.६६)
**अर्थः—** भवेत्। भवेताम्।

**सूत्रम्— झेर्जुस्** (३,४.१०८)
**अर्थः—** लिँङो झेर्जुस् स्यात्। भवेयुः। भवेः। भवेतम्। भवेत। भवेयम्। भवेव। भवेम॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आशीर्लिँङ्लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

भू+ लिँङ्
भू+ ल्
भू+ तिप्
भू+ ति
भू + ति
भू + यास् ति
भू + यास् त्
भू + या त्
**भूयात्**

भू + यास् तस्
भू + यास् + ताम्
**भूयास्ताम्**

## परस्मैपदे आशीर्लिँङ्स्थानिकप्रत्ययानां स्थितिः—

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | या त् | यास् ताम् | यास् उस् |
| मध्यमः | याः | यास् तम् | यास् त |
| उत्तमः | यास् अम् | यास् व | यास् म |

भू+ झि
भू + यास् उस्
**भूयासुः**

भू+ सिप्
भू+यास् स्
भू + या स्
**भूयाः**

{सूत्रम्— आशिषि लिङ्लोटौ (३,३.१७३)}

**सूत्रम्— लिँङाशिषि (३,४.११६)**
**अर्थः—** आशिषि लिँङस्तिङार्धधातुकसंज्ञः स्यात्॥

**सूत्रम्— किदाशिषि (३,४.१०४)**
**अर्थः—** आशिषि लिँङो यासुट् कित्।
स्कोः संयोगाद्योरिति सलोपः॥

**सूत्रम्— क्ङिति च/ ग्क्ङिति च/ क्क्ङिति च (१,१.५)**
**अर्थः—** गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः।

भूयात्। भूयास्ताम्। भूयासुः। भूयाः। भूयास्तम्।
भूयास्त। भूयासम्। भूयास्व। भूयास्म।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लुँङ्लकारस्य प्रक्रिया



## भूतकालिकलकाराणां प्रयोगविज्ञानम्—

1. सामान्यभूते— {लुँङ्} उदा. (अभूत् पुरा भारतभाविभासकः)
2. अनद्यतनभूते— {लँङ्} उदा. (परेद्युः तव गृहे अगच्छम्)
3. अनद्यतनपरोक्षभूते— {लिँट्} उदा. (जघान कंसं किल वासुदेवः)

## माङ्योगे चतुर्णां लकाराणां प्रयोगदर्शनम्—

1. लोँट् — मा ते सङ्गोऽस्त्वकर्मणि। मा हिंस्यात् सर्वभूतानि
2. विधिलिँङ् — माऽसमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत्।
3. लृँट् — मा भविष्यति शीतार्त्ता जानकी हृदयस्थिता।
4. लुँङ् — गर्वं मा कार्षीः। मा लेखीत्।

भू+ लुँङ्
भू+ ल्
भू+ तिप्
अट् भू+ त्

अ भू च्लिँ + त्
अ भू ल् + त्
अ भू सिँच् + त्
अ भू स् + त्

**सूत्रम्**— लुँङ् (३,२.११०)
**अर्थः**— भूतार्थे धातोर्लुँङ् स्यात्॥

**सूत्रम्**— माङि लुँङ् (३,३.१७५)
**अर्थः**— माङ्शब्दे उपपदे धातोर्लुँङ् स्यात्।
सर्वलकारापवादः॥

**सूत्रम्**— स्मोत्तरे लँङ् च (३,३.१७६)
**अर्थः**— स्मोत्तरे माङि (मा स्म) लँङ् स्याच्चाल्लुँङ्॥

**सूत्रम्**— न माङ्योगे (६,४.७४)
**अर्थः**— (माङ्योगे) अडाटौ न स्तः।
मा भवान् भूत्। मा स्म भवत्। मा स्म भूत्॥

**सूत्रम्**— च्लिँ लुँङि (३,१.४३)
**अर्थः**— लुँङि परे धातोः 'च्लिँ'प्रत्ययः स्यात्।
शबाद्यपवादः= शप्+आदि+अपवादः॥

**सूत्रम्**— च्लेः सिँच् (३,१.४४)
**अर्थः**— च्लेः स्थाने 'सिँच्'प्रत्ययः स्यात्। इचावितौ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लुँङ्लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

भू+ लुँङ्
भू+ ल्
भू+ तिप्
अट् भू+ त्
अ भू च्लिँ + त्
अ भू ल् + त्
अ भू सिँच् + त्
अ भू स् + त्
अ भू + त्
**अभूत्**

अ भू + झि
अ भू + वुँक् अन्ति (भुवो वुँग्लुँङ्-लिँटोः)
अ भू + व् अन्त् (संयोगान्तस्य लोपः)
अ भू + व् अन्
**अभूवन्**

अ भू + सिप्
अ भू + स्
**अभूः**

**सूत्रम्— गाति-स्था-घु-पा-भूभ्यः सिँचः परस्मैपदेषु (२,४.७७)**
**अर्थः—** एभ्यः सिँचो लुक् स्यात्। गापौ इह इणादेशपिबती गृह्यते॥
(अयं भावः—सूत्रे 'गा'शब्देन 'इणो गा लुँङि' सूत्रविहित इण्स्थानिक आदेशभूतो 'गा'गृह्यते, न तु औपदेशिक 'गा स्तुतौ/गतौ' गृह्यते। तथैव यस्य पा-धातोः पिबादेशः तस्यैव सूत्रे ग्रहणम्, न तु औपदेशिक पा-रक्षणे इत्यस्य।)
**सूत्रम्— भूसुवोस्तिङि (७,३.८८)**
**अर्थः—** 'भू सू' एतयोः सार्वधातुके तिङि परे गुणो न।
अभूत्। अभूताम्। अभूवन्। अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम।

परस्मैपदे लुँङ्स्थानिक-प्रत्ययानां स्थितिः—

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | त् | ताम् | व् अन् |
| मध्यमः | स् | तम् | त |
| उत्तमः | व् अम् | व | म |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# लृँङ्लकारस्य प्रक्रिया



भू+ लृँङ्
भू+ ल्
भू+ तिप्
अट् भू+ त्
अ भू स्य + त्
अ भू इ ष्य + त्
अ भो इ ष्य + त्
अ भव् इ ष्य + त्
**अभविष्यत्**

परस्मैपदे लृँङ्स्थानिक-प्रत्ययानां स्थितिः—

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | त् | ताम् | अन् |
| मध्यमः | स् | तम् | त |
| उत्तमः | अम् | व | म |

भूतकालिक-क्रियातिपत्तावपि लृँङ्लकारस्य प्रयोगो भवति तद्यथा—
'यदि सुरभिम् अवाप्स्यः तन्मुखोच्छ्वासगन्धं
तव रतिरभविष्यत् पुण्डरीके किमस्मिन्।

**सूत्रम्— लिँङ्-निमित्ते लृँङ् क्रियातिपत्तौ (३,३.१३९)**

**अर्थः—** हेतुहेतुमद्भावादि लिँङ्-निमित्तं तत्र भविष्यत्यर्थे लृँङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम्।

अभविष्यत्। अभविष्यताम्। अभविष्यन्। अभविष्यः। अभविष्यतम्। अभविष्यत। अभविष्यम्। अभविष्याव। अभविष्याम।

सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्, इत्यादि ज्ञेयम्॥

(अयं भावः— अष्टाध्यायां तृतीयाध्याये लिँङ्लकारस्य नैकानि निमित्तान्युक्तानि तद्यथा— 'हेतुहेतुमतोर्लिँङ्' 'इच्छार्थेषु लिँङ्-लौँटौ' इत्यादीनि। हेतुः= कारणं {सुवृष्टिभवनम्} हेतुमत्= कार्यम् {सुभिक्षभवनम्} हेतुहेतुमद्भावः= कार्यकारणसम्बन्धः )। अतिपत्तिः= अनिष्पत्तिः= असिद्धिः। सुवृष्टिर्न जाता इति प्रमाणान्तरेण निश्चितम्। वह्निश्चेत् प्राज्वलिष्यद् ओदनम् अपक्ष्यत् इत्यन्यान्युदाहरणानि ज्ञेयानि।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# भूधातोः कर्तृविवक्षायां दशसु लकारेषु रूपाणि

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

| भू सत्तायाम् सेट्, परस्मै. | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | |
|---|---|---|---|---|---|---|---|---|---|
| लँट् | भवति | भवतः | भवन्ति | भवसि | भवथः | भवथ | भवामि | भवावः | भवामः |
| लिँट् | बभूव | बभूवतुः | बभूवुः | बभूविथ | बभूवथुः | बभूव | बभूव | बभूविव | बभूविम |
| लुँट् | भविता | भवितारौ | भवितारः | भवितासि | भवितास्थः | भवितास्थ | भवितास्मि | भवितास्वः | भवितास्मः |
| लृँट् | भविष्यति | भविष्यतः | भविष्यन्ति | भविष्यसि | भविष्यथः | भविष्यथ | भविष्यामि | भविष्यावः | भविष्यामः |
| लोँट् | भवतु-तात् | भवताम् | भवन्तु | भव- तात् | भवतम् | भवत | भवानि | भवाव | भवाम |
| लँङ् | अभवत् | अभवताम् | अभवन् | अभवः | अभवतम् | अभवत | अभवम् | अभवाव | अभवाम |
| वि.लिँङ् | भवेत् | भवेताम् | भवेयुः | भवेः | भवेतम् | भवेत | भवेयम् | भवेव | भवेम |
| आ.लिँङ् | भूयात् | भूयास्ताम् | भूयासुः | भूयाः | भूयास्तम् | भूयास्त | भूयासम् | भूयास्व | भूयास्म |
| लुँङ् | अभूत् | अभूताम् | अभूवन् | अभूः | अभूतम् | अभूत | अभूवम् | अभूव | अभूम |
| लृँङ् | अभविष्यत् | अभविष्यताम् | अभविष्यन् | अभविष्यः | अभविष्यतम् | अभविष्यत | अभविष्यम् | अभविष्याव | अभविष्याम |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# भूधातोः प्रक्रियायां ध्यातव्यांशाः

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

| | |
|---|---|
| लँट् | धातोः शप् गुणावादेशे कृते तिबादिप्रत्ययानां योजनेन झस्य अन्तादेशे उत्तमपुरुषे सर्वत्रापि दीर्घकरणेन च रूपसिद्धिः। |
| लिँट् | तिबादीनां स्थाने णलादयः। तेषामार्धधातुकत्वात् शप् न। अत्र धातोर्वुगागमे द्वित्वादिकार्ये वलादिप्रत्येषु इडागमे च कृते सिद्धिः। |
| लुँट् | तिप्-तस्-झिस्थाने डा-रौ-रसादेशे, शपं प्रबाध्य तासि, तस्यार्धधातुकत्वाद् इडागमे तस्य सकारस्य सादौ रादौ च प्रत्यये परतो लोपः। |
| लृँट् | शपं प्रबाध्य स्य-प्रत्यये, तस्यार्धधातुकत्वादिडागमे, लुँडवद्धातोः यथायथं गुणादिकार्ये च कृते रूपसिद्धिः। |
| लोँट् | धातोः शप्-गुणावादेशे। प्रत्ययकार्याणि— एरुः, सेर्ह्यपिच्च, अतो हे, मेर्निः, उत्तमे- आडुत्तमस्य पिच्च, लँङ्वद् अतिदेशात् तामादयः सलोपश्च। आशीर्लोँटि तुह्योः स्थाने तातङादेशे कृते रूपसिद्धिः। |
| लँङ् | धातो अडागमे शप्-गुणावादेशे 'इतश्च' इत्यनेन प्रत्ययस्य इकारलोपे तामादि-सलोपे च कृते रूपसिद्धिः। |
| वि.लिँङ् | धातो शप्-गुणावादेशे, यासुँटः स्थाने इयादेशे तस्य यकारस्य वलि परतो लोपे, ङिद्लकारप्रयुक्तकार्ये, झेर्जुसि च कार्ये सिद्धिः। |
| आ.लिँङ् | आर्धधातुकत्वात् शप् न, कित्वाद्धातोर्न गुणः। यासुँट्, ङिद्लकारप्रयुक्तकार्ये झेर्जुसि च कार्ये सिद्धिः। |
| लुँङ् | धातो अडागमे शपं प्रबाध्य च्लेः सिँच् तस्य लुकि, भूसुवोस्तिङि इति गुणनिषेधे ङिद्लकारप्रयुक्तकार्याणि च पूर्ववत्। |
| लृँङ् | शपं प्रबाध्य स्य-प्रत्यये, तस्यार्धधातुकत्वादिडागमे, अडागमे गुणावादेशे ङिद्लकारप्रयुक्तकार्याणि च पूर्ववत् रूपसिद्धिः। |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'अत्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

अत् + लँट्
अत् + ल्
अत् + तिप्
अत् + ति
अत् शप् + ति
अत् अ + ति
**अतति**

**अतँ सातत्यगमने॥ २॥ अतति॥**

**सूत्रम्— अत आदेः (६,४.७०)**

**अर्थः—** अभ्यासस्यादेरतो दीर्घः स्यात्। आत। आततुः। आतुः। आतिथ। आतथुः। आत। आत। आतिव। आतिम। अतिता। अतिष्यति। अततु॥

**सूत्रम्— आडजादीनाम् (६,४.७२)**

**अर्थः—** अजादेरङ्गस्य आट् लुँङ्लँङ्लृँक्षु। आतत्। अतेत्। अत्यात्। अत्यास्ताम्।

अत् + लिँट्
अत् + ल्
अत् + तिप्
अत् + अ (णल्)
अत् अत् + अ
अ अत् + अ
आ अत् + अ= **आत**

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|---|---|
| प्रथमः | अत् + अ+ ति = **अतति** | अत् +अ+ तस् = **अततः** | अत् +अ+ अन्ति = **अतन्ति** | आत्+ अ(णल्) = **आत** | आत् +अतुस् = **आततुः** | आत् +उस् = **आतुः** |
| मध्यमः | अत् +अ+ सिप् = **अतसि** | अत् +अ+ थस् = **अतथः** | अत् +अ+ थ = **अतथ** | आत् +थ(ल्) = **आतिथ** | आत् +अथुस् = **आतथुः** | आत् +अ = **आत** |
| उत्तमः | अत् +अ+ मिप् = **अतामि** | अत् +अ+ वस् = **अतावः** | अत् +अ+ मस् = **अतामः** | आत्+अ(णल्) = **आत** | आत् +व = **आतिव** | आत् + म = **आतिम** |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे ‘अत्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

अत् + लुँट्
अत् + ल्
अत् तास्+ ति
अत् इ तास्+ ति
अतितास्+ आ (डा)
अतित्+ आ
आतिता

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अततु-तात् | अतताम् | अतन्तु | अत- तात् | अततम् | अतत | अतानि | अताव | अताम |
| आतत् | आतताम् | आतन् | आतः | आततम् | आतत | आतम् | आताव | आताम |
| अतेत् | अतेताम् | अतेयुः | अतेः | अतेतम् | अतेत | अतेयम् | अतेव | अतेम |
| अत्यात् | अत्यास्ताम् | अत्यासुः | अत्याः | अत्यास्तम् | अत्यास्त | अत्यासम् | अत्यास्व | अत्यास्म |

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | अतितास् + आ= अतिता | अतितास् + रौ= अतितारौ | अतितास् + रस्= अतितारः |
| मध्यमः | अतितास् + सि= अतितासि | अतितास् + थस्= अतितास्थः | अतितास् + थ= अतितास्थ |
| उत्तमः | अतितास् + मि= अतितास्मि | अतितास् + वस्= अतितास्वः | अतितास् + मस्= अतितास्मः |

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| अतिष्य + तिप् = अतिष्यति | अतिष्य + तस् = अतिष्यतः | अतिष्य + अन्ति = अतिष्यन्ति |
| अतिष्य + सिप् = अतिष्यसि | अतिष्य + थस् = अतिष्यथः | अतिष्य + थ = अतिष्यथ |
| अतिष्य + मिप् = अतिष्यामि | अतिष्य + वस् = अतिष्यावः | अतिष्य + मस् = अतिष्यामः |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'अत्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

अत् + लुँङ् (लुँङ्)
अत् + ल् (अनुबन्धलोपः)
अत् + तिप् (तिप्तस्..)
अत् + त् (इतश्च)
अत् च्लिँ + त् (च्लिँ लुँङि)
अत् सिँच् + त् (च्लेः सिँच्)
आ(ट्) अत् स् + त् (आडजादीनाम्,आटश्च)
आत् इ स् + त् (आर्धधातुकस्येड् वलादेः)
आत् इ स् ई(ट्) + त्(अस्तिसिँचोऽपृक्ते-8.2.28)
आत् इ ई + त् (इट ईटि )
(सिँज्लोप एकादेशे सिद्धो वाच्यः)
अकः सवर्णे दीर्घः- 6.1.101
आत् ई + त्
**आतीत्**

**लुँङि सिँचि इडागमे कृते –**

**सूत्रम्— अस्तिसिँचोऽपृक्ते (७,३.९६)**
अर्थः— विद्यमानात् सिँचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः॥

**सूत्रम्— इट ईटि (८,२.२८)**
अर्थः— इटः परस्य सस्य लोपः स्यादीटि परे।

**वार्त्तिकम्— (सिँज्लोप एकादेशे सिद्धो वाच्यः)।**
अर्थः— एकादेशविषये सिँच्प्रत्ययस्य लोपोऽसिद्धो न भवति।

आतीत्। आतिष्टाम्॥

**सूत्रम्— सिजभ्यस्तविदिभ्यश्च (३,४.१०९)**
अर्थः— सिँचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस्।

आतिषुः। आतीः। आतिष्टम्। आतिष्ट। आतिषम्। आतिष्व। आतिष्म। आतिष्यत्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'अत्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

अत् + लुँङ् (लुँङ्)
अत् + ल् (अनुबन्धलोपः)
अत् + तस् (तिप्तस्..)
अत् + ताम् (तस्थस्थमिपां तांतंतामः)
अत् च्लिँ + ताम् (च्लिँ लुँङि)
अत् सिँच् + ताम् (च्लेः सिँच्)
आट् अत् स् + ताम् (आडजादीनाम्,आटश्च)
आत् इ स् + ताम् (आर्धधातुकस्येड् वलादेः)
आतिष् + ताम् (आदेशप्रत्यययोः)
आतिष् + टाम् (ष्टुना ष्टुः)
**आतिष्टाम्**

आतिष् + झि (सिजभ्यस्तविदिभ्यश्च)
आतिष् + जुस् (चुटू)
आतिष् + उस्
**आतिषुः**

आत् इ स् ई(ट्) + स् (अस्तिसिँचोऽपृक्ते-8.2.28)
आत् इ ई + स् (इट ईटि )
(सिँज्लोप एकादेशे सिद्धो वाच्यः)
अकः सवर्णे दीर्घः- 6.1.101
आत् ई + स्
**आतीः**

अत्+ लुँङ्
अत् + ल्
अत् + तिप्
आ अत् + त्
आत् स्य + त्
आत् इ ष्य + त्
**आतिष्यत्**

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| त् | ताम् | अन् |
| स् | तम् | त |
| अम् | व | म |

| | | | | | |
|---|---|---|---|---|---|
| आती + स्<br>आतीः | आतिष् + तस्<br>आतिष् + तम्<br>आतिष्टम् | आतिष् + थ<br>आतिष् + त<br>आतिष्ट | आतिष् + मिप्<br>आतिष् + अम्<br>आतिषम् | आतिष् + वस्<br>आतिष् + व<br>आतिष्व | आतिष् + मस्<br>आतिष् + म<br>आतिष्म |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'सिध्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

लघु— रमणः

संयोगे परे ह्रस्वं गुरुः— भिक्षा

गुरुः— राधा

लघूपधः— सिध्

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | सेधति | सेधतः | सेधन्ति |
| मध्यमः | सेधसि | सेधथः | सेधथ |
| उत्तमः | सेधामि | सेधावः | सेधामः |

षिधँ गत्याम्॥ ३॥

सूत्रम्— ह्रस्वं लघु (१,४.१०)

अर्थः— ह्रस्वं लघुसंज्ञं स्यात्॥

सूत्रम्— संयोगे गुरु (१,४.११)

अर्थः— संयोगे परे ह्रस्वं गुरु स्यात्॥

सूत्रम्— दीर्घं च (१,४.१२)

अर्थः— गुरु स्यात्॥

सूत्रम्— पुगन्तलघूपधस्य च (७,३.८६)

अर्थः— पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः सार्वधातुकार्धधातुकयोः। धात्वादेरिति सः। सेधति। षत्वम्। सिषेध॥

षिध्+ लँट्
सिध् + ल् (धात्वादेः षः सः)
सिध् + तिप्
सिध् + ति
सिध् शप् + ति
सिध् अ + ति (पुगन्तलघूपधस्य च)
**सेधति**

षिध् + लिँट्
सिध् + ल्
सिध् + तिप्
सिध् + अ (णल्)
सिध् सिध् + अ
सि सिध् + अ
सि षेध् + अ (पुगन्तलघूपधस्य च)
**सिषेध**

1.पुक् अन्तस्य
2.लघु उपधस्य

अङ्गस्य
इकः
इ उ ऋ ऌ

सार्वधातुके/ आर्धधातुके

# परस्मैपदे 'सिध्' धातोः प्रक्रिया



**सूत्रम्—** **असंयोगाल्लिट् कित् (१,२.५)** **अर्थः—** असंयोगात्परोऽपिलिँट् कित् स्यात्। सिषिधतुः। सिषिधुः। सिषेधिथ। सिषिधथुः। सिषिध। सिषेध। सिषिधिव। सिषिधिम। सेधिता। सेधिष्यति। सेधतु। असेधत्। सेधेत्। सिध्यात्। असेधीत्। असेधिष्यत्। एवम्— चिती संज्ञाने॥ ४॥ शुच शोके॥ ५॥

**लिँट्लकारस्य प्रत्ययाः सिषिध्+**

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| अ(णल्) | अतुस् | उस् |
| थ(ल्) | अथुस् | अ |
| अ(णल्) | व | म |

**लुँट्लकारस्य प्रत्ययाः सेधितास्+**

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| आ (डा) | रौ | रस् |
| सि | थस् | थ |
| मि | वस् | मस् |

**लौँट्लकारस्य प्रत्ययाः सेध+**

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | तु, तात् | ताम् | अन्तु |
| मध्यमः | हि/× तात् | तम् | त |
| उत्तमः | आनि | आव | आम |

**लँङ्लकारस्य प्रत्ययाः असेध+**

| | | |
|---|---|---|
| त् | ताम् | अन् |
| स् | तम् | त |
| अम् | व | म |

**विधिलिँङ्लकारस्य प्रत्ययाः सेधेय्+**

| | | |
|---|---|---|
| त् | ताम् | उस् |
| स् | तम् | त |
| अम् | व | म |

**आशीर्लिँङ्लकारस्य प्रत्ययाः सिध्यास्+**

| | | |
|---|---|---|
| त् | ताम् | उस् |
| स् | तम् | त |
| अम् | व | म |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे अदुपधेषु 'गद्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

| | | |
|---|---|---|
| गदति | गदतः | गदन्ति |
| गदसि | गदथः | गदथ |
| गदामि | गदावः | गदामः |

गद् + लिँट्/तिप्/अ (णल्)
गद् + अ
गद् गद् + अ
ग गद् + अ (हलादिशेषः)
ज गद् + अ (कुहोश्चुः)
ज गाद् + अ (अत उपधायाः)
जगाद

| | | |
|---|---|---|
| गदतु-तात् | गदताम् | गदन्तु |
| गद-तात् | गदतम् | गदत |
| गदानि | गदाव | गदाम |

| | | |
|---|---|---|
| जगाद | जगदतुः | जगदुः |
| जगदिथ | जगदथुः | जगद |
| जगाद जगद | जगदिव | जगदिम |

| | | |
|---|---|---|
| गदिता | गदितारौ | गदितारः |
| गदितासि | गदितास्थः | गदितास्थ |
| गदितास्मि | गदितास्वः | गदितास्मः |

| | | |
|---|---|---|
| गदिष्यति | गदिष्यतः | गदिष्यन्ति |
| गदिष्यसि | गदिष्यथः | गदिष्यथ |
| गदिष्यामि | गदिष्यावः | गदिष्यामः |

| | | |
|---|---|---|
| अगदत् | अगदताम् | अगदन् |
| अगदः | अगदतम् | अगदत |
| अगदम् | अगदाव | अगदाम |

गदँ व्यक्तायां वाचि॥ ६॥ गदति॥

सूत्रम्— नेर्गद-नद-पत-पद-घु-मा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-वपति-वहति-शाम्यति- चिनोति-देग्धिषु च (८,४.१७)

अर्थः— उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णो गदादिषु परेषु। प्रणिगदति॥ (प्र + नि + गदति)

सूत्रम्— कुहोश्चुः (७,४.६२)

अर्थः— अभ्यासकवर्ग-हकारयोश्चवर्गादेशः॥

सूत्रम्— अत उपधायाः (७,२.११६)

अर्थः— उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे। जगाद। जगदतुः। जगदुः। जगदिथ। जगदथुः। जगद॥

सूत्रम्— णलुत्तमो वा (७,१.९१)

अर्थः— उत्तमो णल् वा णित्स्यात्। जगाद, जगद। जगदिव। जगदिम। गदिता। गदिष्यति। गदतु। अगदत्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे अदुपधेषु 'गद्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

गद् + लुँङ्/तिप्
अ गद् + त्
अ गद् च्लिँ >सिँच् + त् (च्लिँ लुँङि, च्लेः सिँच्)
अ गद् इ स्+ त् आर्धधातुकस्येड् वलादेः)
अ गद् इ स्+ ई त् (अस्तिसिँचोऽपृक्ते)
अ गाद् ई त् (अतो हलादेर्लघोः )
**अगादीत्, अगदीत्**

गदेत्। गद्यात्॥
सूत्रम्— अतो हलादेर्लघोः (७,२.७)
अर्थः— हलादेर्लघोरकारस्य वृद्धिर्वेडादौ परस्मैपदे सिचि।
अगादीत्, अगदीत्। अगदिष्यत्॥

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| वि.लिँङ् | गदेत् | गदेताम् | गदेयुः | गदेः | गदेतम् | गदेत | गदेयम् | गदेव | गदेम |
| आ.लिँङ् | गद्यात् | गद्यास्ताम् | गद्यासुः | गद्याः | गद्यास्तम् | गद्यास्त | गद्यासम् | गद्यास्व | गद्यास्म |
| लुँङ् | अगादीत्<br>अगदीत् | अगादिष्टाम्<br>अगदिष्टाम् | अगादिषुः<br>अगदिषुः | अगादीः<br>अगदीः | अगादिष्टम्<br>अगदिष्टम् | अगादिष्ट<br>अगदिष्ट | अगादिषम्<br>अगदिषम् | अगादिष्व<br>अगदिष्व | अगादिष्म<br>अगदिष्म |
| लृँङ् | अगदिष्यत् | अगदिष्यताम् | अगदिष्यन् | अगदिष्यः | अगदिष्यतम् | अगदिष्यत | अगदिष्यम् | अगदिष्याव | अगदिष्याम |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अदुपधेषु परस्मैपदिनः 'नद्' धातोः प्रक्रिया




णद्+ लँट्/तिप्
नद्+ति (णो नः )
नद् शप् + ति
**नदति**

असमासे— प्र+ नदति= प्रणदति
(उपसर्गादसमासेऽपि णोपदेशस्य)
प्र+नि+ नदति= प्रणिनदति
(नेर्गद-नद.................)
समासे— प्र+ नामः (णमुँ)= प्रणामः

**णदँ अव्यक्ते शब्दे॥ ७॥**
सूत्रम्— णो नः (६,१.६५)
अर्थः— धात्वादेर्णस्य नः। णोपदेशास्तु अनर्द-नाटि-नाथ्- नाध्-नन्द-नक्क-नॄ-नृतः॥
सूत्रम्— उपसर्गादसमासेऽपि णोपदेशस्य (८,४.१४)
अर्थः— उपसर्गस्थान्निमित्तात्परस्य (णोपदेशस्य) धातोर्नस्य णः (समासेऽसमासेऽपि)। प्रणदति, प्रणिनदति। नदति। ननाद॥
सूत्रम्— अत एकहल्मध्येऽनादेशादेर्लिँटि (६,४.१२०)
अर्थः— लिँण्निमित्तादेशादिकं न भवति यदङ्गम्, तदवयवस्य असंयुक्तहल्मध्यस्थस्य अत एत्वम् अभ्यासलोपश्च किति लिँटि। नेदतुः। नेदुः॥

णद् + लिँट्/तिप्/अ (णल्)
नद् + अ
नद् नद् + अ
न नद् + अ (हलादिशेषः)
न नाद् + अ (अत उपधायाः )
**ननाद**

नद् + अतुस्
नद् नद् + अतुस्
न नद् + अतुस् (हलादिशेषः)
नेद् + अतुस् (अत एकहल्.... )
**नेदतुः**

लिँण्निमित्तादेशादिकं न भवति
यदङ्गम्- न-नद्

तदवयवस्य असंयुक्तहल्मध्यस्थस्य
अत् - न-न् अद् (एत्वम् अभ्यासलोपश्च)
नेद्

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| अ(णल्) | अतुस् | उस् |
| थ(ल्) | अथुस् | अ |
| अ(णल्) | व | म |

संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

# अदुपधेषु परस्मैपदिनः ‘नद्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

**सूत्रम्— थलि च सेटि (६,४.१२१)**

अर्थः— प्रागुक्तं स्यात् । नेदिथ । नेदथुः । नेद । ननाद, ननद । नेदिव । नेदिम । नदिता । नदिष्यति । नदतु । अनदत् । नदेत् । नद्यात् । अनादीत्, अनदीत् । अनदिष्यत् ॥

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| लुँट् | नदिता | नदितारौ | नदितारः | नदितासि | नदितास्थः | नदितास्थ | नदितास्मि | नदितास्वः | नदितास्मः |
| लृँट् | नदिष्यति | नदिष्यतः | नदिष्यन्ति | नदिष्यसि | नदिष्यथः | नदिष्यथ | नदिष्यामि | नदिष्यावः | नदिष्यामः |
| लोँट् | नदतु-तात् | नदताम् | नदन्तु | नद- तात् | नदतम् | नदत | नदानि | नदाव | नदाम |
| लँङ् | अनदत् | अनदताम् | अनदन् | अनदः | अनदतम् | अनदत | अनदम् | अनदाव | अनदाम |
| वि.लिँङ् | नदेत् | नदेताम् | नदेयुः | नदेः | नदेतम् | नदेत | नदेयम् | नदेव | नदेम |
| आ.लिँङ् | नद्यात् | नद्यास्ताम् | नद्यासुः | नद्याः | नद्यास्तम् | नद्यास्त | नद्यासम् | नद्यास्व | नद्यास्म |
| लुँङ् | अनादीत्<br>अनदीत् | अनादिष्टाम्<br>अनदिष्टाम् | अनादिषुः<br>अनदिषुः | अनादीः<br>अनदीः | अनादिष्टम्<br>अनदिष्टम् | अनादिष्ट<br>अनदिष्ट | अनादिषम्<br>अनदिषम् | अनादिष्व<br>अनदिष्व | अनादिष्म<br>अनदिष्म |
| लृँङ् | अनदिष्यत् | अनदिष्यताम् | अनदिष्यन् | अनदिष्यः | अनदिष्यतम् | अनदिष्यत | अनदिष्यम् | अनदिष्याव | अनदिष्याम |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'नन्द्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

टुनदिँ + लँट्/तिप्
नद्+ति (आदिर्ञिटुडवः)
न न् द् + ति (इदितो नुम् धातोः)
न न् द् शप् + ति
न न् द् अ+ ति
नन्दति

लँट्लृँट्लकारयोः प्रत्ययाः नन्द्+

| | | |
|---|---|---|
| ति | तः | अन्ति |
| सि | थः | थ |
| मि | वः | मः |

टुनदिँ समृद्धौ॥ ८॥
सूत्रम्— आदिर्ञिटुडवः (१,३.५)
अर्थः— उपदेशे धातोराद्या एते इतः स्युः॥
सूत्रम्— इदितो नुम् धातोः (७,१.५८)
अर्थः— इदिदन्तस्य धातोर्नुँम् स्यात्। नन्दति। ननन्द। नन्दिता। नन्दिष्यति। नन्दतु। अनन्दत्। नन्देत्। नन्द्यात्। अनन्दीत्। अनन्दिष्यत्।

लुँट्लकारस्य प्रत्ययाः नन्द्+

| | | |
|---|---|---|
| आ (डा) | रौ | रस् |
| सि | थस् | थ |
| मि | वस् | मस् |

लिँट्लकारस्य प्रत्ययाः नन्द् +

| | | |
|---|---|---|
| अ(णल्) | अतुस् | उस् |
| थ(ल्) | अथुस् | अ |
| अ(णल्) | व | म |

| | | |
|---|---|---|
| तु, तात् | ताम् | अन्तु |
| हि/× तात् | तम् | त |
| आनि | आव | आम |

लँङ्लृँङ्लकारस्य प्रत्ययाः अनन्द्,अनन्दिष्य

| | | |
|---|---|---|
| त् | ताम् | अन् |
| स् | तम् | त |
| अम् | व | म |

विधि-आशीर्लिँङ्लुङ्लकाराणां प्रत्ययाः नन्देय्, नन्द्यास्, अनन्दिष्

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| त् | ताम् | उस् |
| स् | तम् | त |
| अम् | व | म |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'अर्च्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

अर्च पूजायाम्॥ ९॥ अर्चति॥
सूत्रम्— तस्मान्नुँड् द्विहलः (७,४.७१)
अर्थः— द्विहलो धातोर्दीर्घीभूतात्परस्य नुँट् स्यात्।
आनर्च। आनर्चतुः। अर्चिता। अर्चिष्यति। अर्चतु।
आर्चत्। अर्चेत्। अर्च्यात्। आर्चीत्। आर्चिष्यत्॥

अर्च् + लिँट्/तिप्/अ (णल्)
अर्च् अर्च् + अ
अ अर्च् + अ (हलादिशेषः)
आ अर्च् + अ (अत आदेः)
आ न् अर्च् + अ (तस्मान्नुँड् द्विहलः)
आनर्च

लँट्लृँट्लकारयोः प्रत्ययाः अर्च ,अर्चिष्य

| | | |
|---|---|---|
| ति | तः | अन्ति |
| सि | थः | थ |
| मि | वः | मः |

लिँट्लकारस्य प्रत्ययाः आनर्च् +

| | | |
|---|---|---|
| अ(णल्) | अतुस् | उस् |
| थ(ल्) | अथुस् | अ |
| अ(णल्) | व | म |

लुँट्लकारस्य प्रत्ययाः अर्चितास्+

| | | |
|---|---|---|
| आ (डा) | रौ | रस् |
| सि | थस् | थ |
| मि | वस् | मस् |

लोँट्लकारस्य प्रत्ययाः अर्च

| | | |
|---|---|---|
| तु, तात् | ताम् | अन्तु |
| हि/× तात् | तम् | त |
| आनि | आव | आम |

लँङ्लृँङ्लकारयोः प्रत्ययाः आर्च,आर्चिष्य

| | | |
|---|---|---|
| त् | ताम् | अन् |
| स् | तम् | त |
| अम् | व | म |

विधि-आशीलिँङ्लुङ्लकाराणां प्रत्ययाः अर्चेय्, अर्च्यास्, आर्चिष्

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| त् | ताम् | उस् |
| स् | तम् | त |
| अम् | व | म |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'व्रज्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

व्रज् + लुँङ्/तिप्
अ व्रज् + त्
अ व्रज् च्लिँ > सिँच् + त्
अ व्रज् इ स्+ त्
अ व्रज् इ स्+ ई त्
अ व्राज् ई त् (अतो हलादेर्लघोः)
**अव्राजीत्**

लँट्लृँट्लकारयोः प्रत्ययाः व्रज , व्रजिष्य

| | | |
|---|---|---|
| ति | तः | अन्ति |
| सि | थः | थ |
| मि | वः | मः |

व्रजँ गतौ॥ १०॥ व्रजति। वव्राज। व्रजिता। व्रजिष्यति। व्रजतु। अव्रजत्। व्रजेत्। व्रज्यात्॥
सूत्रम्— वद-व्रज-हलन्तस्याचः (७,२.३)
अर्थः— एषामचो वृद्धिः सिँचि परस्मैपदेषु।
अव्राजीत्। अव्रजिष्यत्॥

लिँट्लकारस्य प्रत्ययाः वव्राज् +

| | | |
|---|---|---|
| अ(णल्) | अतुस् | उस् |
| थ(ल्) | अथुस् | अ |
| अ(णल्) | व | म |

विधि-आशीर्लिँङ्लुङ्लकाराणां प्रत्ययाः व्रजेय्, व्रज्यास्, अव्राजिष्

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| त् | ताम् | उस् |
| स् | तम् | त |
| अम् | व | म |

लुँट्लकारस्य प्रत्ययाः व्रजितास्+

| | | |
|---|---|---|
| आ (डा) | रौ | रस् |
| सि | थस् | थ |
| मि | वस् | मस् |

लोँट्लकारस्य प्रत्ययाः व्रज

| | | |
|---|---|---|
| तु, तात् | ताम् | अन्तु |
| हि/× तात् | तम् | त |
| आनि | आव | आम |

| | | |
|---|---|---|
| त् | ताम् | अन् |
| स् | तम् | त |
| अम् | व | म |

लँङ्लृँङ्लकारयोः प्रत्ययाः अव्रज, अव्रजिष्य

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# अदुपधेषु परस्मैपदे एदित्- ‘कट्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

कटेँ वर्षावरणयोः॥ ११॥ कटति। चकाट। चकटतुः। कटिता। कटिष्यति। कटतु। अकटत्। कटेत्। कट्यात्॥

सूत्रम्— ह्म्यन्त-क्षण-श्वस-जागृ-णि-श्व्येदिताम् (७,२.५)

अर्थः— ह-म-यान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिँचि। अकटीत्। अकटिष्यत्॥

| प्रकृतिः | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | | लकाराः |
|---|---|---|---|---|---|---|---|---|---|---|
| कट | ति | तस् | अन्ति | सि | थस् | थ | मि | वस् | मस् | लँट् |
| चकट् | अ (णल्) | अतुस् | उस् | थ | अथुस् | अ | अ (णल्) | व | म | लिँट् |
| कटितास् | आ (डा) | रौ | रस् | सि | थस् | थ | मि | वस् | मस् | लुँट् |
| कटिष्य | ति | तस् | अन्ति | सि | थस् | थ | मि | वस् | मस् | लृँट् |
| कट | तु-तात् | ताम् | अन्तु | हि/× - तात् | तम् | त | आनि | आव | आम | लोँट् |
| अकट | त् | ताम् | अन् | स् | तम् | त | अम् | व | म | लँङ् |
| कटेय् | त् | ताम् | उस् | स् | तम् | त | अम् | व | म | विधिलिँङ् |
| कट्यास् | त् | ताम् | उस् | स् | तम् | त | अम् | व | म | आशीर्लिँङ् |
| अकटिष् | त् | ताम् | उस् | स् | तम् | त | अम् | व | म | लुँङ् |
| अकटिष्य | त् | ताम् | अन् | स् | तम् | त | अम् | व | म | लृँङ् |

# परस्मैपदे 'गुप्' धातोः प्रक्रिया



गुप्तिज्किद्भ्यः सन्— ३.१.५ -------- कमेर्णिङ्—३.१.३०
सन्-क्यच्-काम्यच्-क्यङ्-क्यषोऽथाऽऽचारक्विँब्-णिज्-यङस्तथा।
यग्-आय ईयङ् णिङ् चेति द्वादशामी सनादयः॥

गुप् + आय
गोप् + आय (पुगन्तलघूपधस्य च)
गोपाय (सनाद्यन्ता धातवः)
गोपाय+ ति
**गोपायति**

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | ति | तः | अन्ति |
| मध्यमः | सि | थः | थ |
| उत्तमः | मि | वः | मः |

आस् — आ आ(म्) स् — **आस्**
कास् — का आ(म्) स् — **कास्**

गुप् + आय
गोप् + आय (पुगन्तलघूपधस्य च)
गोपाय+ लिँट् (सनाद्यन्ता धातवः)
गोपाय आम्+ लिँट्
गोपाय् आम्+ लिँट्
गोपायाम्+

**गुपूँ रक्षणे॥ १२॥**

सूत्रम्— गुपूँ-धूप-विच्छि-पणि-पनिभ्य आयः(३,१.२८)
अर्थः— एभ्य आयः प्रत्ययः स्यात् स्वार्थे= प्रकृत्यर्थे॥

सूत्रम्— सनाद्यन्ता धातवः (३,१.३२)
अर्थः— सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञकाः। धातुत्वाल्लँडादयः। गोपायति॥

सूत्रम्— आयादय आर्धधातुके वा (३,१.३१)
अर्थः— आर्धधातुकविवक्षायामायादयो वा स्युः।

वार्त्तिकम्— (कास्यनेकाच 'आम्' वक्तव्यः)
अर्थः— कास्धातोः, अनेकाच्-धातोश्चाम् स्यात् लिँटि। आस्कासोराम्विधानान्मस्य नेत्वम्॥

सूत्रम्— अतो लोपः (६,४.४८)
अर्थः— आर्धधातुकोपदेशे यददन्तं तस्यातो लोप आर्धधातुके॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे ‘गुप्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

गुप् + आय (आयादय आर्धधातुके वा )
गोप् + आय (पुगन्तलघूपधस्य च)
गोपाय+ लिँट् (सनाद्यन्ता धातवः )
गोपाय आम्+ लिँट् (कास्यनेकाच ‘आम्’ वक्तव्यः)
गोपाय् आम्+ लिँट् (अतो लोपः)
गोपायाम्+ (आमः, कृत्तद्धितसमासाश्च इति प्रादिपदिकत्वम्)
गोपायाम्+ सुँ (आमः इत्यनेन सोर्लुक्)
गोपायाम्+ कृ + लिँट् (कृञ् चानुप्रयुज्यते लिँटि )
गोपायाम्+ कृ कृ + ति/णल् (अ) (लिँटि धातोर.., परस्मैप..)
गोपायाम्+ कर् कृ + अ (उरत्,रपरः)
गोपायाम्+ च कृ + अ (पूर्वोऽभ्यासः, हलादिशेषः, कुहोश्चुः)
गोपायाम्+ च कार् + अ (अचो ञ्णिति, रपरः)
गोपायां+ च कार् + अ(मोऽनुस्वारः) इति मान्तपदस्यानुस्वारः

सूत्रम्— आमः (२,४.८१)
अर्थः— आमः परस्य लुक्॥
सूत्रम्— कृञ् चानुप्रयुज्यते लिँटि (३,१.४०)
अर्थः— आमन्ताल्लिँट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते। तेषां द्वित्वादि॥
सूत्रम्— उरत् (७,४.६६)
अर्थः— अभ्यास-ऋवर्णस्य अत्(स्यात्) प्रत्यये। रपरः। हलादिः शेषः। वृद्धिः। गोपायाञ्चकार।




गोपायां+ च कार् + अ (वा पदान्तस्य) इति विकल्पेन परसवर्णे

**गोपायाञ्चकार, गोपायांचकार ॥**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'गुप्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

गोप् + आय (आयादय आर्धधातुके वा ) (पुगन्तलघूपधस्य च)
गोपाय+ लिँट् (सनाद्यन्ता धातवः )
गोपाय आम्+ लिँट् (कास्यनेकाच 'आम्' वक्तव्यः)
गोपाय् आम्+ लिँट् (अतो लोपः)
गोपायाम्+ (आमः, कृत्तद्धितसमासाश्च इति प्रादिपदिकत्वम्)
गोपायाम्+ सुँ (आमः इत्यनेन सोर्लुक्) असंयोगाल्लिँट् कित्
गोपायाम्+ कृ + लिँट्/अतुस् (कृञ् चानुप्रयुज्यते लिँटि )
गोपायाम्+ कृ कृ + अतुस् (लिँटि धातोर.., परस्मैप..)
गोपायाम्+ कर् कृ + अतुस् (उरत्,रपरः)
गोपायाम्+ च कृ + अतुस् (पूर्वोऽभ्यासः, हलादिशेषः, कुहोश्चुः)
गोपायाम्+ च क् र् + अतुस् (इको यणचि)
गोपायां+ च क् र् + अ (मोऽनुस्वारः, वा पदान्तस्य)
**गोपायाञ्चक्रतुः॥ गोपायांचक्रतुः॥**

द्वित्वात्परत्वाद्यणि प्राप्ते –
(लिँटि धातोरनभ्यासस्य- ६.१.८) (इको यणचि- ६.१.७७ )
सूत्रम्— द्विर्वचनेऽचि (१,१.५९)
अर्थः— द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्तव्ये।
गोपायाञ्चक्रतुः॥

गोपायाम्+ सुँ (आमः इत्यनेन सोर्लुक्)
गोपायाम्+ कृ + लिँट्/उस् (कृञ् चानुप्रयुज्यते लिँटि )
गोपायाम्+ कृ कृ + उस् (लिँटि धातोर.., परस्मैप..)
गोपायाम्+ कर् कृ + उस् (उरत्,रपरः)
गोपायाम्+ च कृ + उस् (पूर्वोऽभ्यासः, हलादिशेषः, कुहोश्चुः)
गोपायाम्+ च क् र् + उस् (इको यणचि)
गोपायां+ च क् र् + उस् (मोऽनुस्वारः, वा पदान्तस्य)
**गोपायाञ्चक्रुः॥ गोपायांचक्रुः॥**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'गुप्' धातोः प्रक्रिया
## आर्धधातुकेषु इट्-व्यवस्था

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

उपदेशे धातुः एकाच् अनुदात्तः → इट् न → वलादि-आर्धधातुकस्य

गोपायाम्+ कृ + थल् (कृञ् चानुप्रयुज्यते लिँटि)

**अर्थः—** अजन्तेषु (धातुषु) एकाचो (धातवः) ऊद्- ॠदन्तैः = ऊकारान्त-ॠकारान्तैः (भू, पॄ इत्यादयः) (विना) यौति =यु रु-क्ष्णु-शीङ्- स्नु-नु-क्षु-श्वि-डीङ्-श्रीभिः (विना) । वृङ्-वृञ्भ्यां च विना = वर्जयित्वा (अन्ये धातवः) निहताः = अनुदात्ताः स्मृताः = कथिताः ॥

अयं भावः — कारिकोक्ताः सर्वे सेटो धातवः, एतदन्य एकाचोऽनुदात्तधातवः अनिटो ज्ञेयाः।

**सूत्रम्—** एकाच उपदेशेऽनुदात्तात् (७,२.१०)

**अर्थः—** उपदेशे यो धातुरेकाजनुदात्तश्च तत आर्धधातुकस्येण्न।

ऊद्- ॠदन्तै-र्यौति-रु-क्ष्णु-शीङ्- स्नु-नु-क्षु-श्वि-डीङ्- श्रीभिः।
वृङ्-वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः॥

**सन्दर्भप्रसङ्गौ —** 'एकाच उपदेशेऽनुदात्ताद्' इति सूत्रे उपदेशे एकाच्-अनुदात्तधातोः परस्य वलादेरार्धधातुकस्य इट्-निषेधो विहितः। किन्तु धातुषु-उदात्तादिपरिज्ञानपरम्परा-अतीवभ्रष्टा इत्याशङ्क्य ग्रन्थकार अनुदात्तधातूनां बोधं कारयति। एकाच्-अजन्तेषु धातुषु अनुदात्तधातव अधिका उदात्तधातवो न्यूना अतः कारिकायाम् उदात्तान् सङ्गृह्णाति।

**अन्वयः—** अजन्तेषु (धातुषु) एकाचो (धातवः) ऊद्- ॠदन्तैः (विना) यौति-रु-क्ष्णु-शीङ्- स्नु-नु-क्षु-श्वि-डीङ्- श्रीभिः (विना) । वृङ्-वृञ्भ्यां च (विना) निहताः स्मृताः॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'गुप्' धातोः प्रक्रिया

## हलन्तेषु एकाच्-अनुदात्तधातवः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

- कान्तेषु शक्लेकः।
- चान्तेषु पच्-मुच्-रिच्-वच्-विच्-सिचः षट्।
- छान्तेषु प्रच्छेकः।
- जान्तेषु त्यज्-निजिर्-भज्-भञ्ज्-भुज्-भ्रस्ज्-मस्ज्-यज्-युज्-रुज्-रञ्ज्-विजिर्-स्वञ्ज्-सञ्ज्-सृजः पञ्चदश॥
- दान्तेषु अद् क्षुद् खिद् छिद् तुद् नुद् (पद् श्यन्विकरणः) (विद् श्यन्विकरणः) (विनद् श्यन्विकरण) शद् सद् (स्विद् श्यन्विकरणः) स्कन्द् हद्-षोडश।
- धान्तेषु क्रुध् क्षुध् बुध् श्यन्विकरणः बन्ध् युध् रुध् राध् व्यध्
- शुध् साध् सिध् एकादश।
- नान्तेषु मन्यहनी द्वौ।

- पान्तेषु आप् क्षिप् छुप् तप् तिप् तृप् दृप् लिप् लुप् वप् शप् स्वप् सृप्-स्त्रयोदश।
- भान्तेषु यभ् रभ् लभ्स्त्रयः।
- मान्तेषु गम् नम् यम्-रमश्चत्वारः।

### सिद्धान्तकौमुद्यां कारिका

शक्लृ-पच्-मुच्-रिच्-वच्-विच्-सिच्-प्रच्छि-त्यज्-निजिर्-भजः ।
भञ्ज्-भुज्-भ्रस्ज्-मस्जि-यज्-युज्-रुज्-रञ्ज्-विजिर्-स्वञ्जि-सञ्ज-सृजः ॥ २ ॥
अद्-क्षुद्-खिद्-छिद्-तुदि-नुदः-पद्य-भिद्-विद्यति-र्विनद्।
शद्-सदी-स्विद्यति-स्कन्दि-हदी-क्रुध्-क्षुधि-बुध्यती ॥ ३ ॥
बन्धिर्-युधि-रुधी-राधिर्-व्यध्-शुधः-साधि-सिद्ध्यती ।
मन्य-हन्नाप्-क्षिप्-छुपि-तप्-तिप-स्तृप्यति-दृप्यती ॥ ४ ॥
लिप्-लुप्-वप्-शप्-स्वप्-सृपि-यभ्-रभ्-लभ्-गम्-नम्-यमो-रमिः ।
क्रुशिर्-दंशि-दिशी-दृशी-दृश्-मृश्-रिश्-रुश्-लिश्-विश्-स्पृशः-कृषिः ॥ ५ ॥

# परस्मैपदे 'गुप्' धातोः प्रक्रिया

## हलन्तेषु एकाच्-अनुदात्तधातवः



- शान्तेषु क्रुश्-दंश्-दिश्-दृश्-मृश्-रिश्-रुश्-लिश्-विश्-स्पृशो दश।
- षान्तेषु कृष्-त्विष्-तुष्-द्विष्-दुष्-पुष्य-विष्-विष्-शिष्-शुष्-श्लिष्या एकादश॥
- सान्तेषु घस्-वसती द्वौ।
- हान्तेषु दह्-दिह्-दुह्-नह्-मिह्-रुह्-लिह्-वहोऽष्टौ।
- अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतम्॥

### सिद्धान्तकौमुद्यां कारिका

त्विष्-तुष्-द्विष्-दुष्-पुष्य-पिष्-विष्-शिष्-शुष्-श्लिष्यतयो-घसिः।
वसति-र्दह्-दिहि-दुहो-नह्-मिह्-रुह्-लिह्-वहिस्तथा॥ ६॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम्।
तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु॥ ७॥
तृप्-दृपी-तौ वारयितुं श्यना निर्देश आदृतः।
स्विद्यपद्यौ-सिध्यबुध्यौ-मन्यपुष्यश्लिषः श्यना॥ ८॥
वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये।
णिजिर्-विजिर्-शक्लृ-इति सानुबन्धा अमी तथा॥ ९॥
विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते।
व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम्॥ १०॥
रञ्जि-मस्जी-अदि-पदी-तुद्-क्षुद्-शुषि-पुषी-शिषिः।
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसंमतेः॥ ११॥

# परस्मैपदे 'गुप्' धातोः प्रक्रिया



गोपायाम्+ कृ + थल् (कृञ् चानुप्रयुज्यते लिँटि)

ध्यातव्यम्— द्वित्वनिमित्त-अच्-अभावाद् 'द्विर्वचनेऽचि' इति गुणनिषेधो न, तेन पूर्वं गुणः पश्चाद्-द्वित्वम्।

गोपायाम्+ कर् + थ (सार्वधातुकार्धधातुकयोः)

गोपायाम्+ कर् कर् + थ (लिँटि धातोरनभ्यासस्य)

गोपायाम्+ च कर् + थ (पूर्वोऽभ्यासः, हलादिशेषः, कुहोश्चुः)

**गोपायाञ्चकर्थ, गोपायांचकर्थ॥**

गोपायाञ्चकर्थ। गोपायाञ्चक्रथुः। गोपायाञ्चक्र।
गोपायाञ्चकार। गोपायाञ्चकर। गोपायाञ्चकृव।
गोपायाञ्चकृम। गोपायाम्बभूव, गोपायामास। जुगोप।
जुगुपतुः। जुगुपुः॥

सूत्रम्— स्वरतिसूतिसूयतिधूञूदितो वा (७,२.४४)

अर्थः— स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड् वा स्यात्। जुगोपिथ, जुगोप्थ

गुप्+ लिँट्-ति/अ

गुप् गुप् + अ (लिँटि धातोरनभ्यासस्य)

जु गुप् + अ (हलादिशेषः, कुहोश्चुः)

जु गोप् + अ (पुगन्तलघूपधस्य च)

जुगोप

| | | |
|---|---|---|
| जुगोप | जुगुपतुः | जुगुपुः |
| जुगोपिथ जुगोप्थ | जुगुपथुः | जुगुप |
| जुगोप | जुगुपिव | जुगुपिम |
| अ(णल्) | अतुस् | उस् |
| थ(ल्) | अथुस् | अ |
| अ(णल्) | व | म |

भूव् भूव् + अ

भू भूव् + अ

भु भूव् + अ

भ भूव् + अ

ब भूव् + अ

गोपायाम्+बभूव

गोपायाम्बभूव, गोपायांबभूव

अस्+ लिँट्-ति/अ

अस् अस्+ अ

अ अस् + अ

आ अस् + अ (अत आदेः)

आस् + अ

गोपायाम्+आस

गोपायामास

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)




आयादय आर्धधातुके वा
(३,१.३१)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'गुप्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

## लुँट्लकारे गुप्-धातोः प्रकृतिभागः

आय-पक्षे
गोपायितास्+
आय-अभावपक्षे
(इट्-पक्षे) गोपितास् +
(इट्-अभावपक्षे) गोप्तास् +

## लुँट्लकारस्य प्रत्ययाः

| | | |
|---|---|---|
| आ (डा) | रौ | रस् |
| सि | थस् | थ |
| मि | वस् | मस् |

## लृँट्लकारे गुप्-धातोः प्रकृतिभागः

आय-पक्षे
गोपायिष्य+
आय-अभावपक्षे
(इट्-पक्षे) गोपिष्य +
(इट्-अभावपक्षे) गोप्स्य +

## लृँट्कारस्य प्रत्ययाः

| | | |
|---|---|---|
| ति | तः | अन्ति |
| सि | थः | थ |
| मि | वः | मः |

| गुपूँ रक्षणे वेट्, परस्मै. | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | |
|---|---|---|---|---|---|---|---|---|---|
| लोँट् | गोपायतु गोपायतात् | गोपायताम् | गोपायन्तु | गोपाय गोपायतात् | गोपायतम् | गोपायत | गोपायानि | गोपायाव | गोपायाम |
| लँङ् | अगोपायत् | अगोपायताम् | अगोपायन् | अगोपायः | अगोपायतम् | अगोपायत | अगोपायम् | अगोपायाव | अगोपायाम |
| वि.लिँङ् | गोपायेत् | गोपायेताम् | गोपायेयुः | गोपायेः | गोपायेतम् | गोपायेत | गोपायेयम् | गोपायेव | गोपायेम |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'गुप्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

आशीर्लिङ्लकारे प्रकृतिभागः

आय-पक्षे
गोपाय+यास्= गोपाय्यास्
आय-अभावपक्षे
गुप्+ यास्= गुप्यास्

आशीर्लिँङ्लकारस्य प्रत्ययाः

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| त् | ताम् | उस् |
| स् | तम् | त |
| अम् | व | म |

आय-पक्षे
अगोपाय+ इ स्+ ई त् = अगोपायीत्
आय-अभावपक्षे (वद-व्रज-हलन्तस्याचः) इति प्राप्ते
(इट्-पक्षे) अगोप्+ इ स्+ ई त् = अगोपीत् (नेटि)
(इट्-अभावपक्षे) अगौप्+ स्+ ई त् = अगौप्सीत्

इट्-अभावपक्षे) अगौप्+ स्+ आताम् = अगौप्ताम्

गोपायिता, गोपिता, गोप्ता। गोपायिष्यति, गोपिष्यति, गोप्स्यति। गोपायतु। अगोपायत्। गोपायेत्। गोपाय्यात्, गुप्यात्। अगोपायीत्॥

सूत्रम्— नेटि (७,२.४)
अर्थः— इडादौ सिचि हलन्तस्य वृद्धिर्न।
अगोपीत्, अगौप्सीत्॥

सूत्रम्— झलो झलि (८,२.२६)
अर्थः— झलः परस्य सस्य लोपो झलि।
अगौप्ताम्। अगौप्सुः। अगौप्सीः। अगौप्तम्। अगौप्त। अगौप्सम्। अगौप्स्व। अगौप्स्म।
अगोपायिष्यत्, अगोपिष्यत्, अगोप्स्यत्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'क्षि' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

क्षि + ति
क्षि अ (शप्) + ति
क्षे अ + ति (सार्वधातुकार्धधातुकयोः)
क्ष् अय् अ + ति (एचोऽयवायावः)
**क्षयति**

क्षि + लिँट्/तिप्/अ (णल्)
क्षि + अ
क्षि क्षि + अ
कि क्षि + अ (हलादिशेषः)
चि क्षि + अ (कुहोश्चुः)
चि क्षै + अ (अचोञ्णिति)
चि क्ष् आय् + अ (एचोऽयवायावः)
**चिक्षाय**

क्षि क्षये॥ १३॥ क्षयति। चिक्षाय। चिक्षियतुः। चिक्षियुः। एकाच इति निषेधे प्राप्ते –

सूत्रम्— कृ-सृ-भृ-वृ-स्तु-द्रु-स्रु-श्रुवो लिँटि (७,२.१३)
अर्थः— क्रादिभ्य एव लिँट इण्न स्याद्, अन्यस्मादनिटोऽपि (इट्) स्यात्॥



सूत्रम्— अचस्तास्वत् थल्यनिटो नित्यम् (७,२.६१)
अर्थः— उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण्न॥
सूत्रम्— उपदेशेऽत्वतः (७,२.६२)
अर्थः— उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्न स्यात्॥

सूत्रम्— ऋतो भारद्वाजस्य (७,२.६३)
अर्थः— तासौ नित्यानिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मते।
तेन अन्यस्य स्यादेव।



चि क्षि + अतुस् (कुहोश्चुः)
चि क्ष् इय् + अतुस् (अचिश्नुधातु...)
**चिक्षियतुः**

चि क्षि + थ (कुहोश्चुः)
चि क्षि + इ थ (अचिश्नुधातु...)
इट्पक्षे — **चिक्षयिथ**, इडभावे— **चिक्षेथ**

अयमत्र संग्रहः –

**अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम्।**
**ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत्॥**

अर्थः— तास्यनिट्= तासि प्रत्यये(क्षेत्ता इत्यादिषु) नित्यानिट् यो धातुः अजन्तः (क्षि,जि,नी इत्यादयः) अथवा यो धातु अकारवान् (पच्,प्रच्छ इत्यादयः) अयम्= उभयप्रकारको धातुः तस्य थलि वा इड् भवति। ईदृक् = एतादृशप्रकारस्य (तासौ नित्य-अनिट्) ऋदन्त= ह्रस्व-ऋकारान्तो धातु (हृ-ह्वृ इत्यादयः), नित्यानिट्= थलि स नित्य-अनिड् भवति (व-मादिषु तु इड्भवति)। क्राद्यन्यः= क्राद्यष्टधातुभ्य अन्यो धातुः लिटि= व-म-प्रत्यययोः सेड् = नित्यमिड् भवेत्॥

चिक्षयिथ, चिक्षेथ। चिक्षियथुः। चिक्षिय। चिक्षाय, चिक्षय। चिक्षियिव। चिक्षियिम।

| | | |
|---|---|---|
| चिक्षाय | चिक्षियतुः | चिक्षियुः |
| चिक्षयिथ चिक्षेथ | चिक्षियथुः | चिक्षिय |
| चिक्षाय, चिक्षय | चिक्षियिव | चिक्षियिम |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'क्षि' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

क्षि + लुँट्/ ति/ आ(डा)
क्षि तास् + आ
क्षे त् + आ (सार्वधातुकार्धधातुकयोः)
**क्षेता** (एकाच उपदेशेऽनुदात्तादिति इण्निषेधः)

| | | |
|---|---|---|
| क्षेता | क्षेतारौ | क्षेतारः |
| क्षेतासि | क्षेतास्थः | क्षेतास्थ |
| क्षेतास्मि | क्षेतास्वः | क्षेतास्मः |

| | | |
|---|---|---|
| क्षयतु-तात् | क्षयताम् | क्षयन्तु |
| क्षय-तात् | क्षयतम् | क्षयत |
| क्षयानि | क्षयाव | क्षयाम |

| | | |
|---|---|---|
| अक्षयत् | अक्षयताम् | अक्षयन् |
| अक्षयः | अक्षयतम् | अक्षयत |
| अक्षयम् | अक्षयाव | अक्षयाम |

| | | |
|---|---|---|
| क्षयेत् | क्षयेताम् | क्षयेयुः |
| क्षयेः | क्षयेतम् | क्षयेत |
| क्षयेयम् | क्षयेव | क्षयेम |

| | | |
|---|---|---|
| क्षीयात् | क्षीयास्ताम् | क्षीयासुः |
| क्षीयाः | क्षीयास्तम् | क्षीयास्त |
| क्षीयासम् | क्षीयास्व | क्षीयास्म |

क्षि + यास् त्
**क्षीयात्** (अकृत्सार्वधातुकयोर्दीर्घः)

अ क्षि + स् + ई त्
**अक्षैषीत्** (सिचि वृद्धिः परस्मैपदेषु )

क्षेता। क्षेष्यति। क्षयतु। अक्षयत्। क्षयेत्॥

सूत्रम्— अकृत्सार्वधातुकयोर्दीर्घः (७,४.२५)
अर्थः—अजन्ताङ्गस्य दीर्घो यादौ प्रत्यये, न तु कृत्सार्वधातुकयोः। क्षीयात्॥

अजन्त-अङ्गस्य
अ इ उ ऋ
यकारादि-प्रत्यये
दीर्घः
आ ई ऊ ॠ
1.कृत्-प्रत्यये
2.यकारादि-सार्वधातुके

सूत्रम्— सिचि वृद्धिः परस्मैपदेषु (७,२.१)
अर्थः— इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदे सिचि। अक्षैषीत्। अक्षेष्यत्॥

| | | |
|---|---|---|
| अक्षैषीत् | अक्षैष्टाम् | अक्षैषुः |
| अक्षैषीः | अक्षैष्टम् | अक्षैष्ट |
| अक्षैषम् | अक्षैष्व | अक्षैष्म |

संस्कृतसारः

# अदुपधेषु परस्मैपदे 'तप्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

तपँ सन्तापे॥ १४॥ तपति। तताप। तेपतुः। तेपुः। तेपिथ, ततप्थ। तेपिव। तेपिम। तप्ता। तप्स्यति। तपतु। अतपत्। तपेत्। तप्यात्। अताप्सीत्। अताप्ताम्। अतप्स्यत्॥

| प्रकृतिः | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | | लकाराः |
|---|---|---|---|---|---|---|---|---|---|---|
| तप | ति | तस् | अन्ति | सि | थस् | थ | मि | वस् | मस् | लँट् |
| ततप्/तेप् | अ (णल्) | अतुस् | उस् | थ | अथुस् | अ | अ (णल्) | व | म | लिँट् |
| तप्तास् | आ (डा) | रौ | रस् | सि | थस् | थ | मि | वस् | मस् | लुँट् |
| तप्स्य | ति | तस् | अन्ति | सि | थस् | थ | मि | वस् | मस् | लृँट् |
| तप | तु-तात् | ताम् | अन्तु | हि/× - तात् | तम् | त | आनि | आव | आम | लोँट् |
| अतप | त् | ताम् | अन् | स् | तम् | त | अम् | व | म | लँङ् |
| तपेय् | त् | ताम् | उस् | स् | तम् | त | अम् | व | म | विधिलिँङ् |
| तप्यास् | त् | ताम् | उस् | स् | तम् | त | अम् | व | म | आशीर्लिँङ् |
| अताप्-स् | त् | ताम् | उस् | स् | तम् | त | अम् | व | म | लुँङ् |
| अतप्स्य | त् | ताम् | अन् | स् | तम् | त | अम् | व | म | लृँङ् |

# परस्मैपदे 'क्रम्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

संस्कृतसारः छिद्यन्ते सर्वसंशयाः

क्रम् + ति
क्रम् श्यन् + ति
क्राम् य + ति
क्राम्यति

क्रम् + ति
क्रम् शप् + ति
क्राम् अ + ति
क्रामति

क्रमुँ पादविक्षेपे॥ १५॥

सूत्रम्— वा भ्राश-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुटि-लषः (३,१.७०)

अर्थः—एभ्यः श्यन्वा कर्त्रर्थे सार्वधातुके परे। पक्षे शप्॥

सूत्रम्— क्रमः परस्मैपदेषु (७,३.७६)

अर्थः— क्रमो दीर्घः परस्मैपदे शिति। क्राम्यति, क्रामति। चक्राम। क्रमिता। क्रमिष्यति। क्राम्यतु, क्रामतु। अक्राम्यत्, अक्रामत्। क्राम्येत्। क्रामेत्। क्रम्यात्। अक्रमीत्। अक्रमिष्यत्॥

## लँट्लकारस्य 'श्यन्-शप्'पक्षे रूपाणि

| | | |
|---|---|---|
| क्राम्यति, क्रामति | क्राम्यतः, क्रामतः | क्राम्यन्ति, क्रामन्ति |
| क्राम्यसि, क्रामसि | क्राम्यथः, क्रामथः | क्राम्यथ, क्रामथ |
| क्राम्यामि, क्रामामि | क्राम्यावः, क्रामावः | क्राम्यामः, क्रामामः |

| | | |
|---|---|---|
| चक्राम | चक्रमतुः | चक्रामुः |
| चक्रमिथ | चक्रमथुः | चक्रम |
| चक्राम-चक्रम | चक्रमिव | चक्रमिम |

| | | |
|---|---|---|
| क्रमिता | क्रमितारौ | क्रमितारः |
| क्रमितासि | क्रमितास्थः | क्रमितास्थ |
| क्रमितास्मि | क्रमितास्वः | क्रमितास्मः |
| क्रमिष्यति | क्रमिष्यतः | क्रमिष्यन्ति |
| क्रमिष्यसि | क्रमिष्यथः | क्रमिष्यथ |
| क्रमिष्यामि | क्रमिष्यावः | क्रमिष्यामः |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'क्रम्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

| क्रमुँ पादवि. सेट्, परस्मै. | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | |
|---|---|---|---|---|---|---|---|---|---|
| लोँट् | क्राम्यतु-तात्<br>क्रामतु-तात् | क्राम्यताम्<br>क्रामताम् | क्राम्यन्तु<br>क्रामन्तु | क्राम्य-तात्<br>क्राम-तात् | क्राम्यतम्<br>क्रामतम् | क्राम्यत<br>क्रामत | क्राम्यानि<br>क्रामानि | क्राम्याव<br>क्रामाव | क्राम्याम<br>क्रामाम |
| लँङ् | अक्राम्यत्<br>अक्रामत् | अक्राम्यताम्<br>अक्रामताम् | अक्राम्यन्<br>अक्रामन् | अक्राम्यः<br>अक्रामः | अक्राम्यतम्<br>अक्रामतम् | अक्राम्यत<br>अक्रामत | अक्राम्यम्<br>अक्रामम् | अक्राम्याव<br>अक्रामाव | अक्राम्याम<br>अक्रामाम |
| वि.लिँङ् | क्राम्येत्<br>क्रामेत् | क्राम्येताम्<br>क्रामेताम् | क्राम्येयुः<br>क्रामेयुः | क्राम्येः<br>क्रामेः | क्राम्येतम्<br>क्रामेतम् | क्राम्येत<br>क्रामेत | क्राम्येयम्<br>क्रामेयम् | क्राम्येव<br>क्रामेव | क्राम्येम<br>क्रामेम |
| आ.लिँङ् | क्रम्यात् | क्रम्यास्ताम् | क्रम्यासुः | क्रम्याः | क्रम्यास्तम् | क्रम्यास्त | क्रम्यासम् | क्रम्यास्व | क्रम्यास्म |
| लुँङ् | अक्रमीत् | अक्रमिष्टाम् | अक्रमिषुः | अक्रमीः | अक्रमिष्टम् | अक्रमिष्ट | अक्रमिषम् | अक्रमिष्व | अक्रमिष्म |
| लृँङ् | अक्रमिष्यत् | अक्रमिष्यताम् | अक्रमिष्यन् | अक्रमिष्यः | अक्रमिष्यतम् | अक्रमिष्यत | अक्रमिष्यम् | अक्रमिष्याव | अक्रमिष्याम |

क्रम् इ स् + ई त् (वद-व्रज-हलन्तस्याचः) इति प्राप्ते (नेटि) इति निषेधे (अतो हलादेर्लघो) इति वैकल्पिकवृद्धौ प्राप्तायाम् (ह्मन्तक्षण..) इति निषेधे

क्रम् इ + ई त् = अक्रमीत्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे ‘पा’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

## पा पाने॥ १६॥

**सूत्रम्**— पा[1]घ्रा[2]ध्मा[3]स्था[4]म्ना[5]दाण्[6]दृश्य[7]र्ति[8]सर्ति[9]शद[10]सदां[11] पिब[1]जिघ्र[2]धम[3]तिष्ठ[4]मन[5]यच्छ[6]पश्य[7]र्च्छ[8]धौ[9]शीय[10]सीदाः[11]॥ (७,३.७८)

**पदच्छेदः**— दृश्यर्ति= दृशि+अर्त्ति, पश्यर्छ= पश्य+ ऋच्छ।

**अर्थः**—पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे। पिबादेशोऽदन्तस्तेन न गुणः। पिबति॥

पा + ति
पा शप् + ति
पिब अ + ति (अतो गुणे)
**पिबति**

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | पिबति | पिबतः | पिबन्ति |
| मध्यमः | पिबसि | पिबथः | पिबथ |
| उत्तमः | पिबामि | पिबावः | पिबामः |




पा + झि
पा शप् + अन्ति
पिब अ + अन्ति (अतो गुणे)
पिब + अन्ति (अतो गुणे)
**पिबन्ति**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'पा' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | ❖ तिप् णल्(अ) औ | तस् अतुस् | झि उस् |
| मध्यमः | ❖ सिप् थल् (थ) | थस् अथुस् | थ अ |
| उत्तमः | ❖ मिप् णल् (अ) औ | वस् व | मस् म |

| | | |
|---|---|---|
| पपौ | पपतुः | पपुः |
| पपिथ, पपाथ | पपथुः | पप |
| पपौ | पपिव | पपिम |

सूत्रम्— आत औ णलः (७,१.३४)
अर्थः— आदन्ताद्धातोर्णल औकारादेशः स्यात्। पपौ॥
सूत्रम्— आतो लोप इटि च (६,४.६४)
अर्थः— अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः।
पपतुः। पपुः। पपिथ, पपाथ। पपथुः। पप। पपौ। पपिव। पपिम।

पा + ति/णल्(अ)/ औ
पा पा + औ
प पा + औ (ह्रस्वः)
पपौ

प पा + अतुस् (ह्रस्वः)
प प् + अतुस्
पपतुः

आकारस्य

लोपः

अजादि आर्धधातुके

किति → पपा+अतुस्

ङिति → प्रदा+अङ्

इटि → पपा+इ थ

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे ‘पा’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

| पा पाने अनिट् | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | |
|---|---|---|---|---|---|---|---|---|---|
| लुँट् | पाता | पातारौ | पातारः | पातासि | पातास्थः | पातास्थ | पातास्मि | पातास्वः | पातास्मः |
| लृँट् | पास्यति | पास्यतः | पास्यन्ति | पास्यसि | पास्यस्थः | पास्यस्थ | पास्यामि | पास्यावः | पास्यामः |
| लोँट् | पिबतु-तात् | पिबताम् | पिबन्तु | पिब-तात् | पिबतम् | पिबत | पिबानि | पिबाव | पिबाम |
| लँङ् | अपिबत् | अपिबताम् | अपिबन् | अपिबः | अपिबतम् | अपिबत | अपिबम् | अपिबाव | अपिबाम |
| वि.लिँङ् | पिबेत् | पिबेताम् | पिबेयुः | पिबेः | पिबेतम् | पिबेत | पिबेयम् | पिबेव | पिबेम |

पाता। पास्यति। पिबतु। अपिबत्। पिबेत्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे ‘पा’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

पा + लिँङ्/ति
पा + यास् त्
पे + यास् त्
**पेयात्**

| | | |
|---|---|---|
| पेयात् | पेयास्ताम् | पेयासुः |
| पेयाः | पेयास्तम् | पेयास्त |
| पेयासम् | पेयास्व | पेयास्म |

**सूत्रम्— एर्लिँङि (६,४.६७)**
अर्थः— घुसञ्ज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिँङि। पेयात्। गातिस्थेति सिँचो लुक्। अपात्। अपाताम्॥

घुसञ्ज्ञकानाम्— दा,धा
मास्थादीनाम् — मा,स्था,गा, पा, हा, षो

ए — आर्धधातुके किति लिँङि
ए — आर्धधातुके किति लिँङि

पा + लुँङ्/ति
अ पा + त्
अ पा स् + त्
**अपात्**

पा + लुँङ्/झि
अ पा स् + जुस्
अ पा + उस्
अ प् + उ + स्
**अपुः**

**सूत्रम्— आतः (३,४.११०)**
अर्थः— सिँज्लुकि आदन्तादेव झेर्जुस्। (नान्यस्य, तेन अभू+झि(लुँङ्) इत्यादौ प्रत्ययलक्षणमाश्रित्य ‘सिजभ्यस्तविदिभ्यश्च’ इति सूत्रेणापि न जुस्।)

**सूत्रम्— उस्यपदान्तात् (६,१.९६)**
अर्थः— अपदान्तादकारादुसि पररूपमेकादेशः। अपुः। अपास्यत्॥

| | | |
|---|---|---|
| अपात् | अपाताम् | अपुः |
| अपाः | अपातम् | अपात |
| अपाम् | अपाव | अपाम |

| | | |
|---|---|---|
| अपास्यत् | अपास्यताम् | अपास्यन् |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे एजन्तेषु 'ग्लै' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

ग्लै शप् + ति
ग्लै अ + ति
ग्ल् आय् अ + ति
**ग्लायति**

ग्लै + ति/णल्(अ)/ औ
ग्ला ग्ला + औ (आत औ णलः)
ग ग्ला + औ
ज ग्ला + औ = **जग्लौ**

ग्लै हर्षक्षये ॥ १७ ॥ ग्लायति ॥
सूत्रम्— आदेच उपदेशेऽशिति (६,१.४५)
अर्थः— उपदेशे एजन्तस्य धातोरात्वं न तु शिति। जग्लौ। ग्लाता। ग्लास्यति। ग्लायतु। अग्लायत्। ग्लायेत् ॥

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| लँट् | ग्लायति | ग्लायतः | ग्लायन्ति | ग्लायसि | ग्लायथः | ग्लायथ | ग्लायामि | ग्लायावः | ग्लायामः |
| लिँट् | जग्लौ | जग्लतुः | जग्लुः | जग्लिथ<br>जग्लाथ | जग्लथुः | जग्ल | जग्लौ | जग्लिव | जग्लिम |
| लुँट् | ग्लाता | ग्लातारौ | ग्लातारः | ग्लातासि | ग्लातास्थः | ग्लातास्थ | ग्लातास्मि | ग्लातास्वः | ग्लातास्मः |
| लृँट् | ग्लास्यति | ग्लास्यतः | ग्लास्यन्ति | ग्लास्यसि | ग्लास्यथः | ग्लास्यथ | ग्लास्यामि | ग्लास्यावः | ग्लास्यामः |
| लोँट् | ग्लायतु-तात् | ग्लायताम् | ग्लायन्तु | ग्लाय-तात् | ग्लायतम् | ग्लायत | ग्लायानि | ग्लायाव | ग्लायाम |
| लँङ् | अग्लायत् | अग्लायताम् | अग्लायन् | अग्लायः | अग्लायतम् | अग्लायत | अग्लायम् | अग्लायाव | अग्लायाम |
| वि.लिँङ् | ग्लायेत् | ग्लायेताम् | ग्लायेयुः | ग्लायेः | ग्लायेतम् | ग्लायेत | ग्लायेयम् | ग्लायेव | ग्लायेम |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे एजन्तेषु 'ग्लै' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

ग्ला + लिँङ्/ति
ग्ला + यास् त्
ग्ले + यास् त्
**ग्लेयात्, ग्लायात्**

| | | |
|---|---|---|
| ग्लेयात् ग्लायात् | ग्लेयास्ताम् ग्लायास्ताम् | ग्लेयासुः ग्लायासुः |
| ग्लेयाः ग्लायाः | ग्लेयास्तम् ग्लायास्तम् | ग्लेयास्त ग्लायास्त |
| ग्लेयासम् ग्लायासम् | ग्लेयास्व ग्लायास्व | ग्लेयास्म ग्लायास्म |

**सूत्रम्— वाऽन्यस्य संयोगादेः (६,४.६८)**
अर्थः— घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वार्धधातुके किति लिँङि। ग्लेयात्, ग्लायात्॥
**सूत्रम्— यम-रम-नमातां सँक् च (७,२.७३)**
अर्थः— एषां सँक् स्याद्, एभ्यः सिँच इट् स्यात्परस्मैपदेषु। अग्लासीत्। अग्लास्यत्॥

ग्ला + लुँङ्/ति
अ ग्ला-च्लि + त्
अ ग्ला सिँच् + त्
अ ग्ला स् + त्
अग्लास्+ इस् +ई त्
अग्लास्+ इ +ई त्
**अग्लासीत्**

| | | |
|---|---|---|
| अग्लासीत् | अग्लासिष्टाम् | अग्लासिषुः |
| अग्लासीः | अग्लासिष्टम् | अग्लासिष्ट |
| अग्लासिषम् | अग्लासिष्व | अग्लासिष्म |

अग्लास्+ इस् +ताम्
**अग्लासिष्टाम्**

| | | |
|---|---|---|
| अग्लास्यत् | अग्लास्यताम् | अग्लास्यन् |

१.यम्-
२.रम्-
३.नम्
४.आदन्तधातूनाम्
सक् (आगमः)
इट् (आगमः)
सिँचः
परस्मैपदेषु

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे ऋदन्तेषु ‘ह्वृ’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

ह्वृ शप् + लँट्/ति
ह्वृ अ + ति
ह्व् अर् अ + ति
**ह्वरति**

| | | |
|---|---|---|
| ह्वरति | ह्वरतः | ह्वरन्ति |
| ह्वरसि | ह्वरथः | ह्वरथ |
| ह्वरामि | ह्वरावः | ह्वरामः |

ह्वृ + लिँट्/ति/णल्
ह्वृ ह्वृ + अ
ह्व् अर् ह्व् अर् + अ
(उरत्, ऋतश्च संयोगादेर्गुणः)
ह ह्व् अर् + अ
(पूर्वोऽभ्यासः, हलादिशेषः)
झ ह्व् अर् + अ (कुहोश्चुः)
ज ह्व् आर् + अ
(अभ्यासे चर्च, अत उपधायाः)
**जह्वार**

| | | |
|---|---|---|
| ह्वर्ता | ह्वर्तारौ | ह्वर्तारः |
| ह्वर्तासि | ह्वर्तास्थः | ह्वर्तास्थ |
| ह्वर्तास्मि | ह्वर्तास्वः | ह्वर्तास्मः |

| | | |
|---|---|---|
| ह्वरिष्यति | ह्वरिष्यतः | ह्वरिष्यन्ति |
| ह्वरिष्यसि | ह्वरिष्यथः | ह्वरिष्यथ |
| ह्वरिष्यामि | ह्वरिष्यावः | ह्वरिष्यामः |

ह्वृ कौटिल्ये॥ १८॥ ह्वरति॥

सूत्रम्— ऋतश्च संयोगादेर्गुणः (७,४.१०)

अर्थः— ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिँटि। उपधाया वृद्धिः। जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। जह्वरथुः। जह्वर। जह्वार, जह्वर। जह्वरिव। जह्वरिम। ह्वर्ता॥

संयोगादेः ऋदन्ताङ्गस्य ह्वृ, स्मृ इत्यादेः

गुणः

लिँटि

सूत्रम्— ऋद्धनोः स्ये (७,२.१०)

अर्थः— ऋतो हन्तेश्च स्यस्य इट्। ह्वरिष्यति।

१.ऋदन्तधातोः
२.हन्-धातोः

इड् (आगमः)

‘स्य’ इत्यस्य

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे ऋदन्तेषु 'ह्वृ' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

ह्वृ + लिँङ्/ति
ह्वृ + यास् त्
ह्व् अर् + यास् त्
ह्वर्यात्

१.ऋ-धातोः
२.संयोगादि-ऋदन्तधातोः

गुणः

१.यक्-प्रत्यये
२.यकारादौ आर्धधातुके लिँङि

अह्वृ+स् +ई त्

ह्वरतु। अह्वरत्। ह्वरेत्॥
सूत्रम्— गुणोऽर्तिसंयोगाद्योः (७,४.२९)
अर्थः— अर्तेः संयोगादेरृदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिँङि च। ह्वर्यात्। अह्वार्षीत्। अह्वरिष्यत्॥

| ह्वृकौटिल्ये अनिट् | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | |
|---|---|---|---|---|---|---|---|---|---|
| लोँट् | ह्वरतु-तात् | ह्वरताम् | ह्वरन्तु | ह्वर-तात् | ह्वरतम् | ह्वरत | ह्वराणि | ह्वराव | ह्वराम |
| लँङ् | अह्वरत् | अह्वरताम् | अह्वरन् | अह्वरः | अह्वरतम् | अह्वरत | अह्वरम् | अह्वराव | अह्वराम |
| वि.लिँङ् | ह्वरेत् | ह्वरेताम् | ह्वरेयुः | ह्वरेः | ह्वरेतम् | ह्वरेत | ह्वरेयम् | ह्वरेव | ह्वरेम |
| आ.लिँङ् | ह्वर्यात् | ह्वर्यास्ताम् | ह्वर्यासुः | ह्वर्याः | ह्वर्यास्तम् | ह्वर्यास्त | ह्वर्यासम् | ह्वर्यास्व | ह्वर्यास्म |
| लुँङ् | अह्वार्षीत् | अह्वार्ष्टाम् | अह्वार्षुः | अह्वार्षीः | अह्वार्ष्टम् | अह्वार्ष्ट | अह्वार्षम् | अह्वार्ष्व | अह्वार्ष्म |
| लृँङ् | अह्वरिष्यत् | अह्वरिष्यताम् | अह्वरिष्यन् | अह्वरिष्यः | अह्वरिष्यतम् | अह्वरिष्यत | अह्वरिष्यम् | अह्वरिष्याव | अह्वरिष्याम |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'श्रु' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

श्रु + लँट्/ति
शृ श्नु + ति
शृ नु + ति (लशक्वतद्धिते, सार्वधातुकमपित्)
शृ नु + ति (श्नोः ङित्वात् 'क्ङिति च' इत्यनेन 'शृ' इत्यस्य न गुणः, तिपः पित्वान्ङित्वाभावात् सार्वधातुकत्वाच्च 'नु' इत्यस्य गुणं स्यादेव)
शृणोति (ऋवर्णान्नस्य णत्वं वाच्यम्)

| | | |
|---|---|---|
| शृणोति | शृणुतः | शृणु+अन्ति = शृण्वन्ति |
| शृणोषि | शृणुथः | शृणुथ |
| शृणोमि | शृण्वः<br>शृणुवः | शृण्मः<br>शृणुमः |

श्रु श्रवणे॥ १९॥

❖ शृ √ श्रु √
❖ शृ √ श्नु √

सूत्रम्— श्रुवः शृ च (६,१.७४)
अर्थः— श्रुवः 'शृ' इत्यादेशः स्यात्, श्नुप्रत्ययश्च। शपोऽपवादः।

सूत्रम्— सार्वधातुकमपित् (१,२.४)
अर्थः— अपित्सार्वधातुकं ङिद्वत्। शृणोति। शृणुतः॥

सूत्रम्— हुश्नुवोः सार्वधातुके (६,४.८७)
अर्थः— हुश्नुवोरनेकाचोऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके। शृण्वन्ति। शृणोषि। शृणुथः। शृणुथ। शृणोमि॥

सूत्रम्— लोपश्चास्यान्यतरस्यां म्वोः (६,४.१०७)
अर्थः— असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः।
शृण्वः, शृणुवः। शृण्मः, शृणुमः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'श्रु' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

श्रु + लिँट्/ति/णल्
श्रु श्रु + अ
शु श्रु + अ
शु श्रौ + अ
शु श्र् आव् + अ
**शुश्राव**

शु श्रु + अतुस्
शु श्रुव् + अतुस्
**शुश्रुवतुः** (अचिश्नु..)

श्रु + लोट्/ सि/हि
श्रु श्रु + हि
शृ नु+(अपित्वान्न गुणः)
**शृणु**

| | | |
|---|---|---|
| **श्रोता** | श्रोतारौ | श्रोतारः |
| **श्रोतासि** | श्रोतास्थः | श्रोतास्थ |
| **श्रोतास्मि** | श्रोतास्वः | श्रोतास्मः |
| **श्रोष्यति** | श्रोष्यतः | श्रोष्यन्ति |
| **श्रोष्यसि** | श्रोष्यथः | श्रोष्यथ |
| **श्रोष्यामि** | श्रोष्यावः | श्रोष्यामः |
| **शृणोतु शृणुतात्** | शृणुताम् | शृणवन्तु |
| **शृणु-तात्** | शृणुतम् | शृणुत |
| **शृणवानि** | शृणवाव | शृणवाम |

श्रु नो + आनि
शृ न् अव् + आनि= **शृणवानि**

शुश्राव। शुश्रुवतुः। शुश्रुवुः। शुश्रोथ। शुश्रुवथुः। शुश्रुव। शुश्राव, शुश्रव। शुश्रुव। शुश्रुम। श्रोता। श्रोष्यति। शृणोतु, शृणुतात्। शृणुताम्। शृण्वन्तु॥

**सूत्रम्— उतश्च प्रत्ययादसंयोगपूर्वात् (६,४.१०६)**

**अर्थः—** असंयोगपूर्वात् प्रत्यय-उतो हेर्लुक्। शृणु, शृणुतात्। शृणुतम्। शृणुत। गुणावादेशौ। शृणवानि। शृणवाव। शृणवाम। अशृणोत्। अशृणुताम्। अशृण्वन्। अशृणोः। अशृणुतम्। अशृणुत। अशृणवम्। अशृण्व, अशृणुव। अशृण्म, अशृणुम। शृणुयात्। शृणुयाताम्। शृणुयुः। शृणुयाः। शृणुयातम्। शृणुयात। शृणुयाम्। शृणुयाव। शृणुयाम। श्रूयात्। अश्रौषीत्। अश्रोष्यत्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'श्रु' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

| श्रु श्रवणे अनिट् | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | |
|---|---|---|---|---|---|---|---|---|---|
| लँङ् | अशृणोत् | अशृणुताम् | अशृण्वन् | अशृणोः | अशृणुतम् | अशृणुत | अशृणवम् | अशृण्व अशृणुव | अशृण्म अशृणुम |
| वि.लिँङ् | शृणुयात् | शृणुयाताम् | शृणुयुः | शृणुयाः | शृणुयातम् | शृणुयात | शृणुयाम् | शृणुयाव | शृणुयाम |
| आ.लिँङ् | श्रूयात् | श्रूयास्ताम् | श्रूयासुः | श्रूयाः | श्रूयास्तम् | श्रूयास्त | श्रूयासम् | श्रूयास्व | श्रूयास्म |
| लुँङ् | अश्रौषीत् | अश्रौष्टाम् | अश्रौषुः | अश्रौषीः | अश्रौष्टम् | अश्रौष्ट | अश्रौषम् | अश्रौष्व | अश्रौष्म |
| लृँङ् | अश्रोष्यत् | अश्रोष्यताम् | अश्रोष्यन् | अश्रोष्यः | अश्रोष्यतम् | अश्रोष्यत | अश्रोष्यम् | अश्रोष्याव | अश्रोष्याम |

श्रु + लँङ्/ ति
अ शृ नु + त् (गुणः)
अशृणोत्

श्रु + लँङ्/ झि/अन्ति
अ शृ नु + अन्
अशृण्वन् (हुश्नुवोः सार्वधातुके)

श्रु + लिँङ्/ ति
शृ नु + यास् त्
शृणुयात् (स्को..इति सलोपः)

श्रु + लिँङ्/ ति
श्रु + यास् त् (स्को..इति सलोपः)
श्रूयात् (अकृतसार्वधातुकयोर्दीर्घः)

विधिलिँङि— 1.यासुँटो ङित्वान्न कुत्रापि गुणः।
2.यासः अतः परत्वाभावाद् 'अतो येयः' इति न।
3.तिपि सिपि 'स्कोसंयोगाद्यरन्ते च' इत्यनेन सलोपः।
अन्यत्र 'लिङः सलोपोऽनन्त्यस्य' इत्यनेन सलोपः।

श्रु + लुँङ्/ ति
अश्रु + स् ई त् (सिचि वृद्धिः परस्मैपदेषु)
अश्रौषीत्

# परस्मैपदे 'गम्' धातोः प्रक्रिया



गम् + लँट्/ति
गम् अ + ति
गछ् अ + ति
गत् छ् अ + ति (छे च— तुँक्)
गच् छ् अ + ति (श्चुत्वम्)
**गच्छति**

**गमॢँ गतौ ॥**

**सूत्रम्— इषु-गमि-यमां छः (७,३.७७)**
अर्थः— एषां छः स्यात् शिति। गच्छति। जगाम॥

**सूत्रम्— गम-हन-जन-खन-घसां लोपः क्ङित्यनङि (६,४.९८)**
अर्थः— एषामुपधाया लोपोऽजादौ क्ङिति, न त्वङि। जग्मतुः। जग्मुः। जगमिथ, जगन्थ। जग्मथुः। जग्म। जगाम, जगम। जग्मिव। जग्मिम। गन्ता॥

गम् + लिँट्/तस्/अतुस्
गम् गम् + अतुस्
ग गम् + अतुस्
ज गम् + अतुस्
ज ग् म् + अतुस्
**जग्मतुः**

गम् + लुँट्/तिप्/डा
गम् तास् + आ
गं तास् + आ
गन् तास् + आ
**गन्ता**

| | | |
|---|---|---|
| गन्ता | गन्तारौ | गन्तारः |
| गन्तासि | गन्तास्थः | गन्तास्थ |
| गन्तास्मि | गन्तास्वः | गन्तास्मः |

| | | |
|---|---|---|
| गच्छति | गच्छतः | गच्छन्ति |
| गच्छसि | गच्छथः | गच्छथ |
| गच्छामि | गच्छावः | गच्छामः |

संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

# परस्मैपदे 'गम्' धातोः प्रक्रिया



**सूत्रम्— गमेरिट् परस्मैपदेषु (७,२.५८)**

**अर्थः—** गमेः परस्य सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु। गमिष्यति। गच्छतु। अगच्छत्। गच्छेत्। गम्यात्॥

**सूत्रम्— पुषादिद्युताद्य्लृदितः परस्मैपदेषु (३,१.५५)**

दिवादिगणे ६२ पुषादिधातवः सन्ति। भ्वादिगणे १४ द्युतादिधातवः सन्ति। धातुपाठे १४ धातवः ऌदिताः सन्ति।

**अर्थः—** श्यन्विकरणपुषादे-र्द्युतादे-र्ऌदितश्च च्लेरङ् परस्मैपदेषु। अगमत्। अगमिष्यत्॥ इति परस्मैपदिनः।

| प्रकृतिः | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | | लकाराः |
|---|---|---|---|---|---|---|---|---|---|---|
| गमिष्य | ति | तस् | अन्ति | सि | थस् | थ | मि | वस् | मस् | लृँट् |
| गच्छ | तु-तात् | ताम् | अन्तु | हि/× - तात् | तम् | त | आनि | आव | आम | लोँट् |
| अगच्छ | त् | ताम् | अन् | स् | तम् | त | अम् | व | म | लँङ् |
| गच्छेय् | त् | ताम् | उस् | स् | तम् | त | अम् | व | म | विधिलिँङ् |
| गम्यास् | त् | ताम् | उस् | स् | तम् | त | अम् | व | म | आशीर्लिँङ् |
| अगम | त् | ताम् | अन् -/उस् | स् | तम् | त | अम् | व | म | लुँङ् |
| अगमिष्य | त् | ताम् | अन् | स् | तम् | त | अम् | व | म | लृँङ् |

# आत्मनेपदे प्रमुखाः धातवः





१.एधँ वृद्धौ

कमु कान्तौ ॥ २ ॥

अय गतौ ॥ ३ ॥

द्युत दीप्तौ ॥ ४ ॥

श्विता वर्णे ॥ ५ ॥

ञिमिदा स्नेहने ॥ ६ ॥

ञिष्विदा स्नेहनमोचनयोः ॥ ७ ॥

रुच दीप्तावभिप्रीतौ च ॥ ८ ॥

घुट परिवर्तने ॥ ९ ॥

शुभ दीप्तौ ॥ १० ॥

क्षुभ संचलने ॥ ११ ॥

णभ तुभ हिंसायाम् ॥ १२-१३ ॥

स्रंसु भ्रंसु ध्वंसु अवस्रंसने ॥ १४-१५-१६ ॥

स्रम्भु विश्वासे ॥ १७ ॥

वृतु वर्तने ॥ १८ ॥

दद दाने ॥ १९ ॥

त्रपूष् लज्जायाम् ॥ २० ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे 'एध्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

| पुरुषः↓ | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | त | आताम् | झ |
| मध्यमः | थास् | आथाम् | ध्वम् |
| उत्तमः | इट् (इ) | वहि | महिङ् (महि) |

एध् + लँट् त
एध् शप् + त् अ
एध् अ + त् ए
एधते

एध + झ/ अन्त
एधन्ते

एध + थास्/ से
एधसे

एध् + लँट् आताम्
एध् शप् + आत् आम्
एध् अ + इय् त् ए
एध् अ + इ त् ए (लोपो व्योर्वलि)
एध् ए त् ए
एधेते

एध + इ(ट्)
एध + ए (अतो गुणे)
एधे

एधँ वृद्धौ॥ १॥

सार्वधातुकमपित्, अर्थः— अपित्सार्वधातुकं ङिद्वत्।

❖ एत्वविधायकं विधिसूत्रम्—

सूत्रम्— टित आत्मनेपदानां टेरे (३,४.७९)

अर्थः— टितो लस्यात्मनेपदानां टेरेत्वम्। एधते॥

❖ इय्-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— आतो ङितः (७,२.८१)

अर्थः— अतः परस्य ङितामाकारस्य इय् स्यात्। एधेते। एधन्ते॥

❖ से-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— थासः से (३,४.८०)

अर्थः— टितो लस्य थासः से स्यात्। एधसे। एधेथे। एधध्वे। अतो गुणे। एधे। एधावहे। एधामहे॥

**टित्**

लँट्, लिँट्, लुँट्, लृँट्, लेँट्, लोँट्।

**ङित्**

लँङ्, लिँङ्, लुँङ्, लृँङ्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे 'एध्' धातोः लिँट्लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

## बहुव्रीहि-समासः

तद्गुणसंविज्ञानः



अतद्गुणसंविज्ञानः



- तद्= अन्यपदार्थस्य गुणाः= विशेषणानि वर्त्तिपदार्थ-रूपाणि तेषां संविज्ञानम्= क्रियान्वयि-तया ज्ञानं विद्यते यत्र।
- यथा— लम्बकर्णः, कम्बुकण्ठः, आयतललाट इत्यादयः।

- अतद्= अन्यपदार्थस्य गुणाः= विशेषणानि वर्त्तिपदार्थ-रूपाणि तेषां संविज्ञानम्= क्रियान्वयि-तया ज्ञानं न विद्यते यत्र।
- यथा— चित्रगुः, दृष्टमधुरः, इत्यादयः।

- आम्-विधायकं विधिसूत्रम्—

**सूत्रम्— इजादेश्च गुरुमतोऽनृच्छः (३,१.३६)**

अर्थः— इजादिर्यो धातुर्गुरुमान् ऋच्छत्यन्यस्तत आम् स्याल्लिँटि॥

- आमन्तात् परस्मैपदम् आत्मनेपदं वा विधायकं विधिसूत्रम्—

**सूत्रम्— आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य (१,३.६३)**

अर्थः— आम्प्रत्ययो यस्माद् इति अतद्गुणसंविज्ञानो बहुव्रीहिः। आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम्॥

आम्प्रकृतिः= एध्-धातुः तस्मात् कृधातोरपि आत्मनेपदम्

धातुः
इजादि-गुरुमान्
(ईह्,ईक्ष्,एज्,एध्,ऊह् इत्यादयः)

~~ऋच्छ्~~ → आम् → लिँट्

एध् + लिँट्

एध् आम्+ लिँट् (इजादेश्च गुरुमतोऽनृच्छः )

एधाम्+ (आमः, कृत्तद्धितसमासाश्च इति प्रादिपदिकत्वम्)

एधाम् + सुँ (आमः इत्यनेन सोर्लुक्)

एधाम् + कृ + लिँट् (कृञ् चानुप्रयुज्यते लिँटि, आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य)

एधाम् + कृ + त (लिँटि धातोर.., परस्मैप..)

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे 'एध्' धातोः लिँट्लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

एधाम् + कृ + त (लिँटि धातोर.., परस्मैप..)
एधाम् + कृ कृ + ए (श्)
एधाम् + कर् कृ + ए (उरत्,रपरः)
(पूर्वोऽभ्यासः, हलादिशेषः, कुहोश्चुः)
एधाम् + च क् र् + ए (इको यणचि)
एधाम् + च क् र् + ए (मोऽनुस्वारः, वा पदान्तस्य)
**एधाञ्चक्रे, एधांचक्रे**

❖ एश्-इरेच्-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— लिँटस्तझयोरेशिरेच् (३,४.८१)**

**अर्थः—** लिँडादेशयोस्त-झयोर्- 'एश् इरेजे'तौ स्तः। एधाञ्चक्रे। एधाञ्चक्राते। एधाञ्चक्रिरे। एधाञ्चकृषे। एधाञ्चक्राथे॥

❖ ढत्व-विधायकं विधिसूत्रम्—

**सूत्रम्— इणः षीध्वंलुँङ्-लिँटां धोऽङ्गात् (८,३.७८)**

**अर्थः—** इणन्तादङ्गात्परेषां षीध्वंलुँङ्-लिँटां धस्य ढः स्यात्॥ एधाञ्चकृढ्वे। एधाञ्चक्रे। एधाञ्चकृवहे। एधाञ्चकृमहे। एधाम्बभूव। एधामास।

| एधाञ्चकृ + प्रत्ययाः (लिँटि) | | | |
|---|---|---|---|
| प्रथमः | त<br>ए(श्) | आताम् | झ<br>इरे(च्) |
| मध्यमः | थास्<br>से | आथाम् | ध्वम् |
| उत्तमः | इ(ट्) | वहि | महि(ङ्) |

एधाञ्चकृ + ध्वम्

**इणन्त-अङ्गात्**
(इ उ ऋ लृ ए ओ ऐ औ ह् य् व् र् ल्)

१. षीध्वम्— धकारस्य
२. लुँङ्-लिँटाम्— धकारस्य

**ढत्वम्**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे 'एध्' धातोः लुँट्लृँट्-लकारयोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

| | | |
|---|---|---|
| त (डा) | आताम् (रौ) | झ (रस्) |
| थास् (से) | आथाम् | ध्वम् |
| इ(ट्) | वहि | महि(ङ्) |

एध् + लुँट्/ त
एध् तास् + डा
एध् इ तास् + आ
एध् इ त् + आ
एधिता

एधितास् + ध्वम्
एधिताध्वे

एधितास् + इ
एधिताह् + ए
एधिताहे

१. तास्
२. अस्

ह् → ए

❖ एधिता। एधितारौ। एधितारः। (तङादेशानां टेरेत्वं तु न, 'एशिरेज्'इत्येकारोच्चारणात्। अत एव 'थासः से' इति सङ्गच्छते।) एधितासे। एधितासाथे॥

❖ सकार-लोपविधायकं विधिसूत्रम्—

सूत्रम्— धि च (८,२.२५)

अर्थः— धादौ प्रत्यये परे सस्य लोपः। एधिताध्वे॥

❖ हकारादेशविधायकं विधिसूत्रम्—

सूत्रम्— ह एति (७,४.२५)

अर्थः— तासस्त्योः सस्य हः स्यादेति परे। एधिताहे। एधितास्वहे। एधितास्महे। एधिष्यते। एधिष्येते। एधिष्यन्ते। एधिष्यसे। एधिष्येथे। एधिष्यध्वे। एधिष्ये। एधिष्यावहे। एधिष्यामहे॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे 'एध्' धातोः लौँट्लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

एध् + लौँट्/ इ
एध् शप् + इ
एध् अ + आ(ट्) ए
एध् अ + आ ऐ (आटश्च)
एध् अ + ऐ (वृद्धिरेचि)
ऐ
एधै

उत्तमे लौँटि प्रत्ययानां स्थितिः

| | | |
|---|---|---|
| 1. इ(ट्)<br>2. ए<br>3. ऐ | 1. वहि<br>2. वहे<br>3. वहै | 1. महि(ङ्)<br>2. महे<br>3. महै |

❖ आम्-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— आमेतः (३,४.९०)

अर्थः— लोट एकारस्याम् स्यात्।

| | | |
|---|---|---|
| एधते<br>एधताम् | एधेते<br>एधेताम् | एधन्ते<br>एधन्ताम् |
| एधसे<br>एधस्व | एधेथे<br>एधेथाम् | एधध्वे<br>एधध्वम् |

❖ व-अमादेशविधायकं विधिसूत्रम्—

सूत्रम्— सवाभ्यां वामौ (३,४.९१)

अर्थः— सवाभ्याम् परस्य लोडेतः क्रमाद्वामौ स्तः।

❖ ऐकारादेशविधायकं विधिसूत्रम्—

सूत्रम्— एत ऐ (३,४.९३)

अर्थः— लोडुत्तमस्य एत ऐ स्यात्। एधै। एधावहै। एधामहै॥ आटश्च।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे 'एध्' धातोः लँङ्-विधिलिँङ्-लकारयोः प्रक्रिया



एध् + लँङ्/ त
आ एध् + त
ऐध् शप् + त
ऐध् अ + त
ऐधत

ऐध् अ + आताम्
ऐध् अ + इय् ताम्
ऐध् ए ताम्
ऐधेताम्

लिँङ्लकारे प्रत्ययानां स्थितिः

| | | |
|---|---|---|
| त | आताम् | झ रन् |
| थास् | आथाम् | ध्वम् |
| इ अ | वहि | महि |

एध् + लिँङ्/ त
एध् शप् + सीय् त
(लिँङः सलोपोऽनन्त्यस्य, लोपो व्योर्वलि)
एध् अ + ई त
एध् ए त
एधेत

| | | |
|---|---|---|
| एधेय्+ त<br>एधेत | एधेय्+आताम्<br>एधेयाताम् | एधेय्+रन्<br>एधेरन् |
| एधेय्+ थास्<br>एधेथाः | एधेय्+ आथाम्<br>एधेयाथाम् | एधेय्+ध्वम्<br>एधेध्वम् |
| एधेय्+ अ<br>एधेय | एधेय्+ वहि<br>एधेवहि | एधेय्+ महि<br>एधेमहि |

❖ आटश्च। ऐधत। ऐधेताम्। ऐधन्त। ऐधथाः। ऐधेथाम्। ऐधध्वम्। ऐधे। ऐधावहि। ऐधामहि॥

❖ सीयुँडागमविधायकं विधिसूत्रम्—

सूत्रम्— लिँङः सीयुँट् (३,४.१०२)

अर्थः— (लिँङात्मनेपदस्य सीयुँडागमः स्यात्।)

सलोपः (सयोर्लोपः)। एधेत। एधेयाताम्॥

❖ रनादेशविधायकं विधिसूत्रम्—

सूत्रम्— झस्य रन् (३,४.१०५)

अर्थः— लिँङो झस्य रन् स्यात्। एधेरन्। एधेथाः। एधेयाथाम्। एधेध्वम्॥

❖ अत्-आदेशविधायकं विधिसूत्रम्—

सूत्रम्— इटोऽत् (३,४.१०६)

अर्थः— लिँङादेशस्य इटोऽत्स्यात्। एधेय। एधेवहि। एधेमहि॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे ‘एध्’ धातोः आशीर्लिँङ्-लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

एध् + लिँङ्/ त
एध् +सीय् सुँट् त (लोपो व्योर्वलि)
एध् + इ सी स् त (इट् षत्वम्)
एध् + इ षी ष् ट (ष्टुत्वम्)
**एधिषीष्ट**

लिँङ्लकारे प्रत्ययानां स्थितिः

| | | |
|---|---|---|
| स्त | आस्ताम् | झ रन् |
| स्थास् | आस्थाम् | ध्वम् |
| इ अ | वहि | महि |

❖ सुँडागमविधायकं विधिसूत्रम्—

सूत्रम्— सुँट् तिथोः (३,४.१०७)
अर्थः— लिँङस्तथोः सुँट्। यलोपः। आर्धधातुकत्वात्सलोपो न। एधिषीष्ट। एधिषीयास्ताम्। एधिषीरन्। एधिषीष्ठाः। एधिषीयास्थाम्। एधिषीध्वम्। एधिषीय। एधिषीवहि। एधिषीमहि।

| | | |
|---|---|---|
| एधिषीय्+ स्त<br>एधिषीष्ट | एधिषीय्+ आस्ताम्<br>एधिषीयास्ताम् | एधिषीय्+रन्<br>एधिषीरन् |
| एधिषीय्+ स्थास्<br>एधिषीष्ठाः | एधिषीय्+ आस्थाम्<br>एधिषीयास्थाम् | एधिषीय्+ध्वम्<br>एधिषीध्वम् |
| एधिषीय्+ अ<br>एधिषीय | एधिषीय्+ वहि<br>एधिषीवहि | एधिषीय्+ महि<br>एधिषीमहि |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे 'एध्' धातोः लुँङ्-लृँङ्-लकारयोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

| | | |
|---|---|---|
| एध् + लुँङ्/ त<br>आ एध् च्लिँ +त<br>ऐध् इ सिँच्+ त<br>ऐध् इ ष्+ ट<br>**ऐधिष्ट** | एध् + लुँङ्/ झ<br>आ एध् च्लिँ+ झ<br>ऐध् इ सिँच्+ झ<br>ऐध् इ ष्+ अत् अ<br>**ऐधिषत** | एध् + लृँङ्/ त<br>आ एध् स्य+ त<br>ऐध् इ स्य + त<br>ऐध् इ ष्य + त<br>**ऐधिष्यत** |

| | | |
|---|---|---|
| ऐधिष् + त<br>**ऐधिष्ट** | ऐधिष्+आताम्<br>**ऐधिषाताम्** | ऐधिष्+ अत (झ)<br>**ऐधिषत** |
| ऐधिष् + थास्<br>**ऐधिष्ठाः** | ऐधिष्+ आथाम्<br>**ऐधिषाथाम्** | ऐधि(स्) +ध्वम् (धि च)<br>ऐधिढ्वम् (इणः षीध्वं..) |
| ऐधिष्+ इ<br>**ऐधिषि** | ऐधिष् + वहि<br>**ऐधिष्वहि** | ऐधिष्+ महि<br>**ऐधिष्महि** |

ऐधिष्ट। ऐधिषाताम्॥

❖ अत्-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्—** आत्मनेपदेष्वनतः (७,१.५)

**अर्थः—** अनकारात् परस्यात्मनेपदेषु झस्य 'अत्' इत्यादेशः स्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। ऐधिढ्वम्। ऐधिषि। ऐधिष्वहि। ऐधिष्महि।

ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि॥

अकार-भिन्नात् → झ् अ / अत् → आत्मनेपदेषु

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे एधादिधातुषु प्रकृति-प्रत्ययविमर्शः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

| प्रकृतिः | प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | | लकाराः |
|---|---|---|---|---|---|---|---|---|---|---|
| एध | ते | इते | अन्ते | से | इथे | ध्वे | ए | वहे | महे | लँट् |
| एध् | ए | आते | इरे | से | आथे | ध्वे | ए | वहे | महे | लिँट् |
| एधितास् | आ (डा) | रौ | रस् | से | आथे | ध्वे | ए | वहे | महे | लुँट् |
| एधिष्य | ते | इते | अन्ते | से | इथे | ध्वे | ए | वहे | महे | लृँट् |
| एध | ताम् | इताम् | अन्ताम् | स्व | इथाम् | ध्वम् | ऐ | वहै | महै | लोँट् |
| ऐध | त | इताम् | अन्त | थास् | इथाम् | ध्वम् | इ (ट्) | वहि | महि | लँङ् |
| एधेय् | त | आताम् | रन् | थास् | आथाम् | ध्वम् | अ | वहि | महि | विधिलिँङ् |
| एधिषीय् | स्त | आस्ताम् | रन् | स्थास् | आस्थाम् | ध्वम् | अ | वहि | महि | आशीर्लिँङ् |
| ऐधिष् | त | आताम् | अत | थास् | आथाम् | ध्वम् | इ (ट्) | वहि | महि | लुँङ् |
| ऐधिष्य | त | इताम् | अन्त | थास् | इथाम् | ध्वम् | इ (ट्) | वहि | महि | लृँङ् |

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे 'कम्' धातोः लँट्-लकारस्य प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

कम् + णिङ्
काम् + इ (अत उपधायाः)
कामि (सनाद्यन्ताः धातवः)

कामि + लँट्/ त
कामि शप् + त
कामे अ + त
काम् अय् अ + ते
कामयते

कमुँ कान्तौ॥ २॥
❖ णिङ्-विधायकं विधिसूत्रम्—
सूत्रम्— कमेर्णिङ् (३,१.३०)
अर्थः— स्वार्थे। ङित्त्वात्तङ्।
(अनिग्लक्षणत्वान्न वृद्धिनिषेधः)। कामयते॥

| | | |
|---|---|---|
| कामय + ते<br>कामयते | कामय + इते<br>कामयेते | कामय+ अन्ते<br>कामयन्ते |
| कामय+ से<br>कामयसे | कामय+ इथे<br>कामयेथे | कामय+ ध्वे<br>कामयध्वे |
| कामय + ए<br>कामये | कामय + वहे<br>कामयावहे | कामय + महे<br>कामयामहे |

सन्-क्यच्-काम्यच्-क्यङ्-क्यषोऽथाऽऽचारक्विँब्-णिज्-यङस्तथा।
यग्-आय ईयङ् णिङ् चेति द्वादशामी सनादयः॥

(आयादय आर्धधातुके वा)
कामि + लिँट्
कामि आम् + लिँट् (कास्यनेकाच आम्वक्तव्यो लिँटि)
(सार्वधातुका... इति गुणं प्रबाध्य 'णेरनिटि'
इति सूत्रेण गुणे प्राप्ते—)

# आत्मनेपदे ‘कम्’ धातोः लिँट्-लकारस्य प्रक्रिया



(आयादय आर्धधातुके वा)

कामि + लिँट्

कामि आम् + लिँट् (कास्यनेकाच आम्वक्तव्यो लिँटि)

काम् अय् आम् +

कामयाम् कृ+ ए

कामयाम् कृ कृ+ ए

कामयाम् च कृ+ ए

**कामायाञ्चक्रे**

❖ अय्-विधायकं विधिसूत्रम्—

**सूत्रम्— अयामन्ताल्वाय्येत्न्विष्णुषु (६,४.५५)**

**अर्थः—** आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात्। कामायाञ्चक्रे। आयादय इति णिङ् वा। चकमे। चकमाते। चकमिरे। चकमिषे। चकमाथे। चकमिध्वे। चकमे। चकमिवहे। चकमिमहे।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| कामयाञ्चकृ/ चकम् | ए | आते | इरे | से | आथे | ध्वे | ए | वहे | महे | लिँट् |

# आत्मनेपदे ‘कम्’ धातोः लुँट्तः लिँङ्-लकारं यावत्प्रक्रिया



कम् + णिङ्
काम् + इ
**कामि**

कामि + लुँट्/त
कामे इ तास् + आ (डा)
**कामयिता**

कामि + इट् षीय् ध्वम्
कामय् + इ षी ध्वम्

कामयिता। कामयितासे। कमिता। कामयिष्यते, कमिष्यते। कामयताम्। अकामयत। कामयेत। कामयिषीष्ट॥

❖ ढत्व-विधायकं विधिसूत्रम्— इण्-प्रत्याहारात् → इट् → १.षीध्वम् २.लुँङ् ३.लिँटाम् — ध् → ढ्

**सूत्रम्— विभाषेटः (८,३.७९)**

**अर्थः—** इणः परो य इट् ततः परेषां षीध्वंलुङ्-लिटां धस्य वा ढः।

कामयिषीढ्वम्, कामयिषीध्वम्। कमिषीष्ट। कमिषीध्वम्॥

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| कामयितास् कमितास् | आ (डा) | रौ | रस् | से | आथे | ध्वे | ए | वहे | महे | लुँट् |
| कामयिष्य कमिष्य | ते | इते | अन्ते | से | इथे | ध्वे | ए | वहे | महे | लृँट् |
| कामय | ताम् | इताम् | अन्ताम् | स्व | इथाम् | ध्वम् | ऐ | वहै | महै | लोँट् |
| अकामय | त | इताम् | अन्त | थास् | इथाम् | ध्वम् | इ (ट्) | वहि | महि | लँङ् |
| कामयेय् | त | आताम् | रन् | थास् | आथाम् | ध्वम् | अ | वहि | महि | विधिलिँङ् |
| कामयिषीय् कमिषीय् | स्त | आस्ताम् | रन् | स्थास् | आस्थाम् | ध्वम् | अ | वहि | महि | आशीर्लिँङ् |

# आत्मनेपदे 'कम्' धातोः लुँङ्लकारस्य प्रक्रिया



❖ चङ्-आदेशविधायकं विधिसूत्रम्—

**सूत्रम्— णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ् (३,१.४८)**

**अर्थः—** ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुँङि परे। अकामि अ त इति स्थिते –

❖ णिलोप-विधायकं विधिसूत्रम्—

**सूत्रम्— णेरनिटि (६,४.५१)**

**अर्थः—** अनिडादावार्धधातुके परे णेर्लोपः स्यात्। तेन न यण्।

❖ ह्रस्व-विधायकं विधिसूत्रम्—

**सूत्रम्— णौ चङ्युपधाया ह्रस्वः (७,४.१)**

**अर्थः—** चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात्॥

❖ द्वित्व-विधायकं विधिसूत्रम्—

**सूत्रम्— चङि (६,१.११)**

**अर्थः—** चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य॥

अजर्घा यो न जानाति यो न जानात्यचर्करीत्। (अवर्वरीः)
अचीकमत यो न जानाति तस्मै कन्या न दीयते॥

कामि + लुँङ्/ त
कामि च्लिँ + त (च्लिँ लुँङि, 'च्लेः सिँच्' इति प्राप्ते)
कामि चङ् + त (णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ् )
कामि अ + त (णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ् )
काम् अ + त (एरनेका..इति यणि प्राप्ते, 'णेरनिटि' )
कम् अ + त (प्रत्ययलक्षणमाश्रित्य'णौ चङ्युपधाया ह्रस्वः' )
कम् कम् अ + त (चङि)
क कम् अ + त (अभ्यासकार्यम्)
च कम् अ + त (कुहोश्चुः)

# आत्मनेपदे 'कम्' धातोः लुँङ्लकारस्य प्रक्रिया



अभ्यासः
च कम् इ अ + त
णि चङ्
अङ्गम्
ककारोत्तर-अकारः लघु

कम् च्लिँ + लुँङ्/त
कम् कम् चङ् + त
च कम् अ + त
**अचकमत**

'चकम् अ त' इत्यत्र चङ्परणिपरम् अङ्गम् 'चकम्' इति तस्याभ्यासः 'च' इति, स च ककारोत्तराकाररूपलघुपरः, तस्याभ्यासस्य सनि परे यत्कार्यम् इत्त्वदीर्घरूपं तद् भवति। यत्र च णिनिमित्तकोऽग्लोपः 'अचकथत्' इत्यादौ तत्र न तत्कार्यम्। प्रकृते तु उपदेश एव उकारलोपो न णिनिमित्तः॥

चि कम् अ + त (सन्यतः)
ची कम् अ + त (दीर्घो लघोः)
अची कम् अ + त (दीर्घो लघोः)
**अचीकमत**

❖ सन्वद्भाव-विधायकम् अतिदेशसूत्रम्—

**सूत्रम्— सन्वल्लघुनि चङ्परेऽनग्लोपे (७,४.९३)**

अर्थः— चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः, तस्य =अभ्यासस्य सनीव कार्यं स्याण्णावग्लोपेऽसति॥

❖ इकारादेश-विधायकं विधिसूत्रम्—

**सूत्रम्— सन्यतः (७,४.७९)**

अर्थः— अभ्यासस्यात इत् स्यात् सनि॥

❖ दीर्घ-विधायकं विधिसूत्रम्—

**सूत्रम्— दीर्घो लघोः (७,४.९४)**

अर्थः— लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये।

अचीकमत, णिङ्-अभावपक्षे –

वार्त्तिकम्—(कमेश्च्लेश्चङ् वाच्यः)।

(तथा च न सन्वद्भावेत्यदीर्घाः), अचकमत।

अकामयिष्यत, अकमिष्यत॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे ‘अय्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| अय | ते | इते | अन्ते | से | इथे | ध्वे | ए | वहे | महे | लँट् |
| अयाञ्चक्र | ए | आते | इरे | से | आथे | ध्वे | ए | वहे | महे | लिँट् |
| अयितास् | आ (डा) | रौ | रस् | से | आथे | ध्वे | ए | वहे | महे | लुँट् |
| अय | ताम् | इताम् | अन्ताम् | स्व | इथाम् | ध्वम् | ऐ | वहै | महै | लोँट् |
| आय | त | इताम् | अन्त | थास् | इथाम् | ध्वम् | इ | वहि | महि | लँङ् |
| अयेय् | त | आताम् | रन् | थास् | आथाम् | ध्वम् | अ | वहि | महि | वि.लिँङ् |
| अयिषीय् | स्त | आस्ताम् | रन् | स्थास् | आस्थाम् | ध्वम् | अ | वहि | महि | आ.लिँङ् |
| आयिष् | त | आताम् | अत | थास् | आथाम् | ध्वम् | इ | वहि | महि | लुँङ् |

अय् आम्+ लिँट् (दयायासश्च )
अयाम् कृ + लिँट्/त
अयाम् कृ कृ + ए

अयाम् कर् कृ + ए
अयाम् च कृ + ए
अयाञ्चक्रे

प्र+ अयते
प्रायते= प्लायते

परा+ अयते
परायते= पलायते

अयँ गतौ॥ ३॥ अयते॥

❖ लत्व-विधायकं विधिसूत्रम्—

**सूत्रम्—** उपसर्गस्यायतौ (८,२.१९)

**अर्थः—** अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात्। प्लायते। पलायते॥

❖ आम्-विधायकं विधिसूत्रम्—

**सूत्रम्—** दयायासश्च (३,१.३७)

**अर्थः—** दय् अय् आस् एभ्य आम् स्याल्लिँटि। अयाञ्चक्रे। अयिता। अयिष्यते। अयताम्। आयत। अयेत। अयिषीष्ट। **विभाषेटः**। अयिषीढ्वम्, अयिषीध्वम्। आयिष्ट। आयिढ्वम्, आयिध्वम्। आयिष्यत॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे ‘द्युत्’ धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| द्योत | ते | इते | अन्ते | से | इथे | ध्वे | ए | वहे | महे | लँट् |
| दिद्युत् | ए | आते | इरे | से | आथे | ध्वे | ए | वहे | महे | लिँट् |
| द्योतितास् | आ (डा) | रौ | रस् | से | आथे | ध्वे | ए | वहे | महे | लुँट् |
| द्योत | ताम् | इताम् | अन्ताम् | स्व | इथाम् | ध्वम् | ऐ | वहै | महै | लोँट् |
| अद्योत | त | इताम् | अन्त | थास् | इथाम् | ध्वम् | इ | वहि | महि | लँङ् |
| द्योतेय् | त | आताम् | रन् | थास् | आथाम् | ध्वम् | अ | वहि | महि | वि.लिँङ् |
| द्योतिषीय् | स्त | आस्ताम् | रन् | स्थास् | आस्थाम् | ध्वम् | अ | वहि | महि | आ.लिँङ् |
| अद्युत | त् | ताम् | अन् | स् | तम् | त | अम् | व | म | प.लुँङ् |
| अद्योतिष् | त | आताम् | अत | थास् | आथाम् | ध्वम् | इ | वहि | महि | लुँङ् |

द्युतँ दीप्तौ॥ ४॥ द्योतते॥

❖ सम्प्रसारण-विधायकं विधिसूत्रम्—

सूत्रम्— द्युति-स्वाप्योः सम्प्रसारणम्॥

अर्थः— अनयोरभ्यासस्य सम्प्रसारणं स्यात्। दिद्युते॥

❖ परस्मैपद-विधायकं विधिसूत्रम्—

सूत्रम्— द्युद्भ्यो लुँङि (१,३.९१)

अर्थः— द्युतादिभ्यो लुँङः परस्मैपदं वा स्यात्। पुषादीत्यङ्। अद्युतत्, अद्योतिष्ट। अद्योतिष्यत॥

द्युत् द्युत् + ए
द् इ उ त् द्युत् + ए
द् इ द्युत् + ए= दिद्युते

अ द्युत् च्लिँ+ त्
अ द्युत् अ+ त्
अद्युतत्

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे 'द्युतादि' धातूनां प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| द्योत | ते | इते | अन्ते | से | इथे | ध्वे | ए | वहे | महे | लँट् |
| दिद्युत् | ए | आते | इरे | से | आथे | ध्वे | ए | वहे | महे | लिँट् |
| द्योतितास् | आ (डा) | रौ | रस् | से | आथे | ध्वे | ए | वहे | महे | लुँट् |
| द्योत | ताम् | इताम् | अन्ताम् | स्व | इथाम् | ध्वम् | ऐ | वहै | महै | लोँट् |
| अद्योत | त | इताम् | अन्त | थास् | इथाम् | ध्वम् | इ | वहि | महि | लँङ् |
| द्योतेय् | त | आताम् | रन् | थास् | आथाम् | ध्वम् | अ | वहि | महि | वि.लिँङ् |
| द्योतिषीय् | स्त | आस्ताम् | रन् | स्थास् | आस्थाम् | ध्वम् | अ | वहि | महि | आ.लिँङ् |
| अद्युत | त् | ताम् | अन् | स् | तम् | त | अम् | व | म | प.लुँङ् |
| अद्योतिष् | त | आताम् | अत | थास् | आथाम् | ध्वम् | इ | वहि | महि | लुँङ् |

- एवं श्विताँ वर्णे॥ ५॥
- ञिमिदाँ स्नेहने॥ ६॥
- ञिष्विदाँ स्नेहनमोचनयोः॥ ७॥ मोहनयोरित्येके। ञिक्ष्विदाँ चेत्येके॥
- रुचँ दीप्तावभिप्रीतौ च॥ ८॥
- घुटँ परिवर्तने॥ ९॥
- शुभँ दीप्तौ॥ १०॥
- क्षुभँ संचलने॥ ११॥
- णभँ तुभँ हिंसायाम्॥ १२-१३॥
- स्रंसुँ भ्रंसुँ ध्वंसुँ अवस्रंसने॥ १४-१५-१६॥ ध्वंसुँ गतौ च॥
- स्रम्भुँ विश्वासे॥ १७॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे द्युतादिषु ‘वृत्’ धातोः प्रक्रिया



| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| वर्त | ते | इते | अन्ते | से | इथे | ध्वे | ए | वहे | महे | लँट् |
| ववृत् | ए | आते | इरे | से | आथे | ध्वे | ए | वहे | महे | लिँट् |
| वर्तितास् | आ (डा) | रौ | रस् | से | आथे | ध्वे | ए | वहे | महे | लुँट् |
| *वर्त्स्य<br>*वर्तिष्य | ति<br>ते | तस्<br>इते | अन्ति<br>अन्ते | सि<br>से | थस्<br>इथे | थ<br>ध्वे | मि<br>ए | वस्<br>वहे | मस्<br>महे | लृँट् |
| वर्त | ताम् | इताम् | अन्ताम् | स्व | इथाम् | ध्वम् | ऐ | वहै | महै | लोँट् |
| अवर्त | त | इताम् | अन्त | थास् | इथाम् | ध्वम् | इ | वहि | महि | लँङ् |
| वर्त्तेय् | त | आताम् | रन् | थास् | आथाम् | ध्वम् | अ | वहि | महि | वि.लिँङ् |
| वर्तिषीय् | स्त | आस्ताम् | रन् | स्थास् | आस्थाम् | ध्वम् | अ | वहि | महि | आ.लिँङ् |
| अवृत | त् | ताम् | अन् | स् | तम् | त | अम् | व | म | प.लुँङ् |
| अवर्तिष् | त | आताम् | अत | थास् | आथाम् | ध्वम् | इ | वहि | महि | लुँङ् |

वृतुँ वर्तने॥ १८॥ वर्त्तते/ वर्तते॥ ववृते। वर्तिता॥

❖ विकल्पेन परस्मैपद-विधायकं विधिसूत्रम्—

सूत्रम्— वृद्भ्यः स्यसनोः (१,४.९२)

अर्थः— वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात्स्ये सनि च॥

❖ इट्-निषेधकसूत्रम्—

सूत्रम्— न वृद्भ्यश्चतुर्भ्यः (७,२.५९)

अर्थः— वृतुँ-वृधुँ-शृधुँ-स्यन्दूभ्यः सकारादेरार्धधातुकस्येण् न स्यात्, तङानयोरभावे। वर्त्स्यति, वर्तिष्यते। वर्तताम्। अवर्तत। वर्तेत। वर्तिषीष्ट। अवृतत्, अवर्तिष्ट। अवर्त्स्यत्, अवर्तिष्यत॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# आत्मनेपदे 'दद्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

ददँ दाने॥ १९॥ ददते॥

❖ एत्व-अभ्यासलोप-निषेधकं सूत्रम्—

सूत्रम्— न शस-दद-वादिगुणानाम्॥

अर्थः— शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य च एत्वाभ्यासलोपौ न।

दददे। दददाते। दददिरे। ददिता। ददिष्यते। ददताम्। अददत। ददेत। ददिषीष्ट। अददिष्ट। अददिष्यत॥

| प्रथमपुरुषः | | | मध्यमपुरुषः | | | उत्तमपुरुषः | | |
|---|---|---|---|---|---|---|---|---|
| ददते | ददेते | ददन्ते | ददसे | ददाथे | ददध्वे | ददे | ददावहे | ददामहे |
| ददते | दददाते | दददिरे | दददिषे | दददाथे | दददिध्वे | दददे | दददिवहे | दददिमहे |
| ददिता | ददितारौ | ददितारः | ददितासे | ददितासाथे | ददिताध्वे | ददिताहे | ददितास्वहे | ददितास्महे |
| ददिष्यते | ददिष्येते | ददिष्यन्ते | ददिष्यसे | ददिष्येथे | ददिष्यध्वे | ददिष्ये | ददिष्यावहे | ददिष्यामहे |
| ददताम् | ददेताम् | ददन्ताम् | ददस्व | ददेथाम् | ददध्वम् | ददै | ददावहै | ददामहै |
| अददत | अददेताम् | अददन्त | अददथाः | अददेथाम् | अददध्वम् | अददे | अददावहि | अददामहि |
| ददेत | ददेयाताम् | ददेरन् | ददेथाः | ददेयाथाम् | ददेध्वम् | ददेय | ददेवहि | ददेमहि |
| ददिषीष्ट | ददिषीयास्ताम् | ददिषीरन् | ददिषीष्ठाः | ददिषीयास्थाम् | ददिषीध्वम् | ददिषीय | ददिषीवहि | ददिषीमहि |
| अददिष्ट | अददिषाताम् | अददिषत | अददिष्ठाः | अददिषाथाम् | अददिध्वम् | अददिषि | अददिष्वहि | अददिष्महि |
| अददिष्यत | अददिष्येताम् | अददिष्यन्त | अददिष्यथाः | अददिष्येथाम् | अददिष्यध्वम् | अददिष्ये | अददिष्यावहि | अददिष्यामहि |

१.शस्
२.दद्
३.वकारादीनां धातूनाम्— वम्, वन्....
४.गुणशब्देन विहित-अकार एतादृशानां धातूनाम्— पॄ-पर्, लू- लव्............

# आत्मनेपदे 'त्रप्' धातोः प्रक्रिया



**त्रपूँष् लज्जायाम्॥ २०॥ त्रपते॥**

❖ एत्व-अभ्यासलोप-विधायकं विधिसूत्रम्—

**सूत्रम्— तृ-फल-भज-त्रपश्च॥ (६,४.१२२)**

अर्थः— एषामत एत्वमभ्यासलोपश्च स्यात् किति लिँटि, सेटि थलि च। त्रेपे। त्रपिता, त्रप्ता। त्रपिष्यते, त्रप्स्यते। त्रपताम्। अत्रपत। त्रपेत। त्रपिषीष्ट, त्रप्सीष्ट। अत्रपिष्ट, अत्रप्त। अत्रपिष्यत, अत्रप्स्यत॥

**॥इत्यात्मनेपदिनः॥**

त्रप्+ लिँट्
त्रप्+ त/ एश्
त्रप् त्रप् + ए
त्रेप् + ए
त्रेपे

त्रेपिषे
त्रेप्से

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु प्रमुख-धातवः

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

श्रिञ् सेवायाम्॥ १॥

भृञ् भरणे॥ २॥

हृञ् हरणे॥ ३॥

धृञ् धारणे॥ ४॥

णीञ् प्रापणे॥ ५॥

डुपचँष् पाके॥ ६॥

भजँ सेवायाम्॥ ७॥

यजँ देवपूजा सङ्गतिकरणदानेषु॥ ८॥

वहँ प्रापणे॥ ९॥

# उभयपदिधातुषु 'श्रि' धातोः प्रक्रिया



श्रिञ् सेवायाम्॥ १॥ श्रयति, श्रयते। शिश्राय, शिश्रिये। श्रयितासि, श्रयितासे। श्रयिष्यति, श्रयिष्यते। श्रयतु, श्रयताम्। अश्रयत्, अश्रयत। श्रयेत्, श्रयेत। श्रीयात्, श्रयिषीष्ट। चङ्। (चङि गुणात् पूर्वम् इयङ्) अशिश्रियत्, अशिश्रियत। अश्रयिष्यत्, अश्रयिष्यत॥

श्रि + लिँट्
श्रि श्रि+ ति/ णल्
शि श्रै + अ (अचो ञ्णिति)
शि श्र् आय् + अ
**शिश्राय**

श्रि श्रि+ अतुस्
शि श्रिय् + अतुस्
(अचि श्नु....)
**शिश्रियतुः**

# उभयपदिधातुषु ‘भृ’ धातोः प्रक्रिया



भृ + लिँङ्
भृ + यास् त्
भ् रि + यास् त्
**भ्रियात्**

भृ + सीय् स् त
भृ + षी ष् ट
**भृषीष्ट**

भृ + लुँङ्
अभृ स्+ त
अभृ + त
**अभृत**

भृञ् भरणे॥ २॥ भरति, भरते। बभार। बभ्रतुः। बभ्रुः। बभर्थ। बभृव। बभृम। बभ्रे। बभृषे। भर्तासि, भर्तासे। भरिष्यति, भरिष्यते। भरतु, भरताम्। अभरत्, अभरत। भरेत्, भरेत॥

❖ रिङादेश-विधायकं विधिसूत्रम्—

सूत्रम्— रिङ् शयग्लिङ्क्षु (७,४.२८)

अर्थः— शे यकि यादावार्धधातुके लिङि च ऋतो रिङ् आदेशः स्यात्। रीङि प्रकृते रिङ्-विधानसामर्थ्याद्दीर्घो न। भ्रियात्॥

❖ किद्भावविधायकम्- अतिदेशसूत्रम्—

सूत्रम्— उश्च (१,२.१२)

अर्थः— ऋवर्णात्परौ झलादी लिङ्-सिचौ कितौ स्तस्तङि। भृषीष्ट। भृषीयास्ताम्। अभार्षीत्॥

❖ सिज्लोप-विधायकं विधिसूत्रम्—

सूत्रम्— ह्रस्वादङ्गात् (८,२.२७)

अर्थः— सिचो लोपो झलि। अभृत। अभृषाताम्। अभरिष्यत्, अभरिष्यत॥

# उभयपदिधातुषु 'हृ - भजँ ' धातूनां प्रक्रिया



- हृञ् हरणे ॥ ३ ॥ हरति, हरते। जहार। जहर्थ। जह्रिव। जह्रिम। जह्रे। जह्रिषे। हर्तासि, हर्तासे। हरिष्यति, हरिष्यते। हरतु, हरताम्। अहरत्, अहरत। हरेत्, हरेत। ह्रियात्, हृषीष्ट। हृषीयास्ताम्। अहार्षीत्, अहृत। अहरिष्यत्, अहरिष्यत॥
- धृञ् धारणे ॥ ४ ॥ धरति, धरते॥
- णीञ् प्रापणे ॥ ५ ॥ नयति, नयते॥
- डुपचँष् पाके ॥ ६ ॥ पचति, पचते। पपाच। पेचिथ, पपक्थ। पेचे। पक्तासि, पक्तासे॥
- भजँ सेवायाम् ॥ ७ ॥ भजति, भजते। बभाज, भेजे। भक्तासि, भक्तासे। भक्ष्यति, भक्ष्यते। अभाक्षीत्, अभक्त। अभक्षाताम्॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'यज्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम् (तिङन्ते भ्वादयः)

यज् + लिँट्
यज् यज् + अ
इज् यज् + अ
इ यज् + अ
**इयाज**

यज् + अतुस्
इज् + अतुस्
इज् इज् + अतुस्
इ इज् + अतुस्
**ईजतुः**

यज् + थ
इज् यज् + थ
इ यज् + इ थ
**इयजिथ**
इ यज् + थ
इ यष् + थ
इ यष् + ठ
**इयष्ठ**

यज् + स्य + लृँट्/ति
यष् + स्य + ति
यक् + ष्य + ति
यक्ष्यति

यजिर्वपिर्वहिश्चैव वसिर्वेञ्व्येञ् इत्यपि।
ह्वेञ्-वदी श्वयतिश्चैव यजाद्याः स्युरिमे नव॥

ग्रहि-ज्या-वयि-व्याधि-वष्टि-विचति-वृश्चति-पृच्छति-भृज्जतीनां ङिति च

**यजँ देवपूजा-सङ्गतिकरणदानेषु॥ ८॥ यजति, यजते॥**

❖ सम्प्रसारण-विधायकं विधिसूत्रम्—
सूत्रम्— **लिँट्यभ्यासस्योभयेषाम् (६,१.१७)**
अर्थः— वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणं लिँटि। इयाज॥

सम्प्रसारणं तदाश्रयकार्यं च बलवत्

❖ सम्प्रसारण-विधायकं विधिसूत्रम्—
सूत्रम्— **वचिस्वपियजादीनां किति॥ (६,१.१५)**
अर्थः— वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात् किति। ईजतुः। ईजुः। इयजिथ, इयष्ठ। ईजे। यष्टा॥

❖ कादेश-विधायकं विधिसूत्रम्—
सूत्रम्— **षढोः कः सि (८,२.४१)**
अर्थः— षस्य ढस्य च कः स्यात् सकारे परे।
यक्ष्यति, यक्ष्यते। इज्यात्, यक्षीष्ट। अयाक्षीत्, अयष्ट॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'वह्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

| | |
|---|---|
| वह् + लिँट्/तिप् /णल् | वह् + अतुस् |
| वह् वह् + अ | उह् + अतुस् |
| उह् वह् + अ | उह् उह् + अतुस् |
| उ वाह् + अ | उ उह् + अतुस् |
| **उवाह** | **ऊहतुः** |

| | |
|---|---|
| उह् वह् + थल् | वह्+लुँट्/ति/डा |
| उ वढ् + थ (हो ढः) | वढ् तास्+ आ |
| उ वढ् + ध | वढ् धास्+ आ |
| उ वढ् + ढ (ष्टुना ष्टुः) | वढ् ढास्+ आ |
| उ व + ढ (ढो ढे लोपः) | व ढास्+ आ |
| उवो+ढ (सहिवहोरोदवर्णस्य) | वो ढास्+ आ |
| **उवोढ** | **वोढा** |

ढत्व-धत्व-ष्टुत्व-ढलोप-ओत्वम्

**वहँ प्रापणे॥ ९॥** वहति, वहते। उवाह। ऊहतुः। ऊहुः। उवहिथ॥ पक्षे धत्वे—




❖ धादेश-विधायकं विधिसूत्रम्—

**सूत्रम्— झषस्तथोर्धोऽधः (८,२.४०)**

**अर्थः—** झषः परस्योस्तथोर्धः स्यान्न तु दधातेः॥

❖ ढकारलोप-विधायकं विधिसूत्रम्—

**सूत्रम्— ढो ढे लोपः (८,३.१३)**

**अर्थः—** ढस्य लोपः स्यात् ढकारे परे।

सह्-वह्-धातोः
**अवर्णस्य**
ओ
ढलोपे

❖ ओत्-आदेश-विधायकं विधिसूत्रम्—

**सूत्रम्— सहिवहोरोदवर्णस्य (६,३.११२)**

**अर्थः—**अनयोरवर्णस्य ओत्स्याड्ढलोपे। उवोढ। ऊहे। वोढा। वक्ष्यति। अवाक्षीत्। अवोढाम्। अवाक्षुः। अवाक्षीः। अवोढम्। अवोढ। अवाक्षम्। अवाक्ष्व। अवाक्ष्म। अवोढ। अवक्षाताम्। अवक्षत। अवोढाः। अवक्षाथाम्। अवोढ्वम्। अवक्षि। अवक्ष्वहि। अवक्ष्महि॥

**॥ इति भ्वादयः॥**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# उभयपदिधातुषु 'वह्' धातोः प्रक्रिया

लघुसिद्धान्तकौमुद्याम्
(तिङन्ते भ्वादयः)

वह्+लृँट्/ति
वढ् स्य+ ति
वक् स्य +ति(षढोः कः सि)
वक् ष्य +ति
**वक्ष्यति**

ढत्व-कत्व-षत्वम्

वह्+ आ.लिँङ्/ति
वह् + यास् त्
उह् + यास् त्
**उह्यात्**

वचिस्वपियजादीनां किति

वह्+ आ.लिँङ्/त
वढ्+ सीय् स्त
वक् + सीय् स्त
वक् + षी ष्ट
**वक्षीष्ट**

ढत्व-कत्व-षत्व-ष्टुत्वम्

वह्+ लुँङ्/त्
वह् च्लिँ+ त्
अवह् स्+ ई त्
अवाह् स्+ ई त्
अवाढ् स्+ ई त्
अवाक् ष्+ ई त्
**अवाक्षीत्**

ढत्व-कत्व-षत्वम्

# परस्मैपदिधातूनां परीक्षणम्-१

**1. अकर्मकेभ्यो धातुभ्यो लकारा भवन्ति—**

क. कर्त्तरि

ख. भावे

**ग. भावे कर्त्तरि च**

घ. कर्मणि कर्त्तरि च

**2. अष्टादशसु लादेशेषु षष्ठ आदेशः कः ?**

**क. थ**

ख. थस्

ग. थ, थस्

घ. ध्वम्

**3. एतेषु परस्मैपदसञ्ज्ञकं प्रत्ययं नास्ति—**

क. झि

ख. थस्

ग. मिप्

**घ. इड्**

**4. असङ्गतं कथनं चिनुत—**

क. अनुदात्तेत-धातोरात्मनेपदं भवति।

ख. परगामिनि क्रियाफले स्वरितेत्-धातोरात्मनेपदं भवति।

ग. आत्मनेपदनिमित्तहीनाद्धातोः कर्त्तरि परस्मैपदं भवति।

घ. तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः।

**5. एतेषु कस्य सार्वधातुकसञ्ज्ञा नास्ति—**

क. शप्

ख. इड्

**ग. लिँडादेशस्तिङाम्**

घ. श्यन्

**6. 'बभूव' इति रूपं लिँट्लकारे कतिषु स्थानेषु निष्पन्नं भवति ?**

क. द्वयोः

**ख. त्रिषु**

ग. चतुर्षु

घ. एकस्मिन्

**7. 'स्यतासी लृँ-लुँटोः' इति सूत्रस्य प्रवृत्तिः कुत्र भवति ?**

क. लुँटि

ख. लृँटि

ग. लृँङि

**घ. लुँट्-लृँट्-लृँङ्लकारेषु**

**8. कस्य लकारस्य प्रयोगः विध्यार्थेषु आशिषि च भवति ?**

क. लोँटः

ख. लिँङः

ग. लृँङः लृँटः च

**घ. लौँटः लिँङः च**

**9. परस्मैपदे ङित्लकारेषु इदं कार्यं न भवति —**

क. वस्-मसोः सकारस्य लोपः।

ख. मिपः स्थाने अमादेशः।

ग. इकारस्य लोपः

**घ. अडागमः**

**10. अशुद्धं रूपं चिनुत—**

क. प्रभवाणि

ख. अन्तर्भवाणि

**ग. दुर्भवाणि**

घ. प्रणिगदति

**11. 'भूवन्' इति रूपं कस्मिन् लकारे संभवति ?**

क. लिँटि

ख. न कुत्रापि

ग. लँङि

**घ. लुँङि**

**12. अशुद्धं वाक्यं चिनुत —**

क. सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्।

**ख. मोहनः प्रपरश्वः सुरनगरं गमिष्यति।**

ग. एवं हि श्रूयते त्रेतायुगे रामो बभूव।

घ. यशस्वी भवतात्।

**13. 'आत् इ + ई त्' इत्यत्र सवर्णदीर्घस्य प्राप्तौ का बाधा ?**

क. सवर्णपरत्वाभावः

ख. संहिताया अभावः

ग. सवर्णदीर्घस्यासिद्धिः

**घ. सिज्लोपस्यासिद्धिः**

**14. एतेषु अयं धातुः णोपदेशः—**

क. नृत्

ख. नर्द्

**ग. नद्**

घ. नाथ्

**15. 'अत एकहल्मध्येऽनादेशादेर्लिँटि' इति सूत्रस्य शुद्धार्थः कः?**

क. लिँण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्य संयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च किति लिँटि।

ख. लिँण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्य आत एत्वमभ्यासलोपश्च किति लिँटि।

ग. लिँण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च किति लिँटि थलि च सेटि।

**घ. लिँण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च किति लिँटि।**

**16. नुँम्-भवति—**

**क. इदिदन्त-धातुभ्यः**

ख. उदन्त-धातुभ्यः

ग. इकारान्त-धातुभ्यः

घ. अजन्त-धातुभ्यः

**17. एतेषु कस्माद्धातोः लुँङि वृद्धिर्न भवति—**

क. गद्

ख. नद्

ग. व्रज्

**घ. कट्**

**18. गुप्-धातोरिदं रूपं न सम्भवति—**

क. जुगोप

ख. गोपायांचकार

ग. गोपायामासुः

**घ. अगौप्साताम्**

**19. क्षि-धातुसन्दर्भे असङ्गतं कथनं चिनुत—**

क. चिक्षाय इत्यत्र वृद्धिस्तथा चिक्षियतु इत्यत्र इयङादेशो भवति।

**ख. क्षि-धातोः पाठः 'ऊदॄदन्तै....' कारिकामध्येऽस्ति अतोऽयं धातुरनिट्।**

ग. थलि त्वस्य धातोर्विकल्पेनेड्भवति।

घ. 'कृ-सृ-भृ-वृ-स्तु-द्रु-स्रु-श्रुवो लिँटि' इति सूत्रेण व-मप्रत्ययेषु परतो नित्यमिड्विधीयते।

**20. अशुद्धं समुदायं चिनुत—**

क. ततापं तेपतुः तेपुः

ख. चक्राम चक्रमतुः चक्रमुः

ग. पपौ पपतुः पपुः

**घ. ननन्द नेदतुः नेदुः**

**21. जग्लौ इति रूपं कस्य धातोः रूपम् ?**

क. ग्ला

ख. जग्ला

**ग. ग्लै**

घ. जग्लै

**22. अधोलिखितस्य सूत्रस्य पूर्णशुद्धस्वरूपं चिनुत—**

क. पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिसदशदां
पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः।

ख. पाघ्राध्मास्थाम्नाद्राण्दृश्यर्तिसर्तिशदसदां
पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः।

ग. पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां
पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्क्षधौशीयसीदाः।

**घ. पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां
पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः।**

**23. एतेष्वनिट्सु दान्तेषु को धातुर्नास्ति—**

क. स्विद्

ख. पद्

ग. तुद्

**घ. वद्**

**24. लघुसिद्धान्तकौमुद्यनुसारं हलन्तेषु कति धातवोऽनुदात्ताः सन्ति?**

क. शतम्

ख. द्व्यधिकं शतम्

**ग. त्र्यधिकं शतम्**

घ. नवनवतिः

**25. गुप्-धातोः दशसु लकारेषु कति रूपाणि ( 'अनचि च' 'वाऽवसाने' इत्यनयोर्द्धित्वं विना) —**

क. 185

ख. 187

**ग. 203**

घ. 196

# आत्मनेपदिधातूनां परीक्षणम्-२

१.एतेषु 'टित आत्मनेपदानां टेरे' इति सूत्रं कुत्र प्रवर्त्तते—

क. एधसे

ख. एधाञ्चक्रे

**ग. एधे**

घ. एधै

२. 'आतो ङितः' इति सूत्रविषये इदं कथनं समीचीनं नास्ति—

क. ङिद्ग्रहणस्य प्रवृत्तिष्टित्लकारेष्वपि भवति।

**ख. ङित्लकारेष्वेवास्य सूत्रस्य प्रवृत्तिर्भवति।**

ग. अतः परस्य ङितामाकारस्य 'इय्' अनेन विधीयते।

घ. 'एधेथे' इत्यत्रापि 'इय्' अनेन विधीयते।

३. 'एधाञ्चक्रे' इत्यत्र 'आम्' प्रत्ययविधायकं सूत्रं वर्त्तते—

क. आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य

ख. कास्यनेकाच् 'आम्' वक्तव्यः

ग. आमः

**घ. इजादेश्च गुरुमतोऽनृच्छः**

४. 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इत्यस्य विषये इदं कथनम् असमीचीनम्—

क. आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः।

ख. यद्धामः प्रकृतिरात्मनेपदी तदानुप्रयुज्यमानात् 'कृ' धातोरात्मने पदम्, तस्य परस्मैपदित्वे परस्मैपदम्, तस्य उभयपदित्वे उभयपदं भवति।

ग. अत्र 'कृञ्' इत्यनेन कृधातोर्ग्रहणं भवति,न तु प्रत्याहारस्य।

**घ. इदं सूत्रम् अतिदेशसूत्रं नास्ति।**

५. इण्णन्तादङ्गात्परेषां ............ धस्य ढः स्यात्।

**क. षीध्वंलुँङ्लिँटाम्**

ख. लुँङ्लिँटाम्

ग. एधतेः

घ. एधाञ्चकृढ्वे

६.अशुद्धं रूपं चिनुत—

क. एधिताहे

ख. एधस्व

**ग. एधाञ्चक्रिमहे**

घ. एधाञ्चक्रे

७. 'एधध्वम्' इत्यत्र एत्वं न भवति, तस्य प्रमुखं कारणं किम् ?

क. इदं रूपं टित्लकारस्य नास्ति।

ख. अत्र 'टित आत्मनेपदानां टेरे' इत्यस्य प्राप्तिरेव नास्ति।

**ग. ‘सवाभ्यां वामौ’ इत्यनेन एत्वं बाध्यते।**

घ. लौँटि एत्वं न प्रवर्त्तते।

८. ‘आर्धधातुकत्वात् स-लोपो न’ इदं वाक्यं कस्मिन् सन्दर्भेऽस्ति—

**क. आशीर्लिँङ्विषये**

ख. विधिलिँङ्विषये

ग. सिँच्विषये

घ. लुँङ्विषये

९. अयं प्रत्ययादेशो झस्य स्थाने न भवति—

**क. अन्त**

ख. इरे

ग. रन्

घ. अत्

१०. एधिताहे, ऐधिष्ट, ऐधे, एधै, ऐधिढ्वम्— एतानि रूपाणि क्रमशः सन्ति—

क. लुँट्-लँङ्-लुँङ्-लोट्-लुँङ्-लकाराणाम्

**ख. लुँट्- लुँङ्-लँङ्- लोट्-लुँङ्-लकाराणाम्**

ग. लोट्-लुँट्- लुँङ्-लँङ्- लुँङ्-लकाराणाम्

घ. लोट्- लुँङ्-लँङ्- लुँङ्- लुँट्- लकाराणाम्

११. ‘कमुँ कान्तौ’ इत्यत्र कान्तिशब्दस्य कोऽर्थः ?

**क. इच्छा**

ख. आभा

ग. शोभा

घ. अवबोधनम्

१२. अधो-लिखितेषु सूत्रेषु कस्य प्रवृत्तिः ‘कामयाञ्चक्रे’ इत्यत्र न भवति—

क. कमेर्णिङ्

ख. अयामन्ताल्वाय्येत्न्विष्णुषु

ग. आमः

**घ. एचोऽयवायावः**

१३. ‘अचीकमत’ इत्यस्य प्रक्रियायां इदं कार्यं न भवति—

क. द्वित्वम्

**ख. ईत्वम्**

ग. ह्रस्वः

घ. दीर्घः

१४. अशुद्धं रूपं चिनुत—

**क. कामायषीढ्वम्**

ख. कामयिषीध्वम्

ग. चकमे

घ. अचकमत

१५. 'चकम् अ त' इत्यत्र 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यस्य सुष्ठु सङ्घटनप्रकारोऽस्ति—

क. चङ्परे णौ यदङ्गम्= कम्, तस्याभ्यासः= 'च' इति, स च ककारोत्तर-अकारात् परेऽस्ति अतो लघुपरः, णावग्लोपेऽसति तस्य सनीव कार्यं स्यात्।

ख. चङ्परे णौ यदङ्गम्= चकम्, तस्याभ्यासः= 'च' इति, स च ककारोत्तर-अकारात् परेऽस्ति अतो लघुपरः, णावग्लोपे सति तस्य सनीव कार्यं स्यात्।

**ग. चङ्परे णौ यदङ्गम्= चकम्, तस्याभ्यासः= 'च' इति, स च ककारोत्तर-अकाररूपलघुपरः, णावग्लोपेऽसति तस्य सनीव कार्यं स्यात्।**

घ. चङ्परे णौ यदङ्गम्= कम्, तस्याभ्यासः= 'च' इति, स च ककारोत्तर-अकाररूपलघुपरः, णावग्लोपे सति तस्य सनीव कार्यं स्यात्।

१६. 'परा+ अयते' इत्यत्र रूपं भवति—

क. परायते

ख. परायते

**ग. पलायते**

घ. पराजयते

१७. अय्-धातोर् आशीर्लिँङि ध्वमि किं रूपम्?

क. अयिषीढ्वम्

ख. आयिषीध्वम्

ग. आयिढ्वम्

**घ. अयिषीढ्वम्, अयिषीध्वम्**

१८. द्युत्-धातोः सम्प्रसारणं कुत्र भवति?

**क. लिँटि**

ख. लुङिँ

ग. लँटि

घ. लिँङि

१९. द्युतादिषु कति धातवः सन्ति?

क. अष्टादश

ख. सप्तदश

**ग. द्वाविंशतिः**

घ. विंशतिः

२०. वृतादिषु कति धातवः सन्ति?

**क. पञ्च**

ख. द्वौ

ग. चत्वारः

घ. षट्

२१. अस्य धातोर् लृँटि-लुँङि-लृँङि परस्मैपदं विकल्पेन भवति—

क. द्युतँ दीप्तौ

ख. शुभँ दीप्तौ

**ग. वृतुँ वर्त्तने**

घ. ददँ दाने

२२. ‘वृधुँ वर्धने’ इति धातोरिदं रूपं न कुत्रापि सम्भवति—

क. वर्धे

ख. वर्त्स्यति

ग. अवर्धिष्ट

**घ. अवर्धामहे**

२३. एतेषु कस्य धातोः लिँटि एत्व-अभ्यासलोपौ भवतः—

**क. त्रप्**

ख. दद्

ग. द्युत्

घ. अय्

२४. त्रपिता-त्रप्ता इत्यत्र इड्-विकल्पः केन भवति—

क. क्रादिनियमेन

ख. भारद्वाजनियमेन

**ग. स्वरतिसूतिसूयतिधूञूदितो वा**

घ. तॄ-फल-भज-त्रपश्च

२५. आत्मनेपदे लँटि कति प्रत्ययाः ङिद्वत् सन्ति—

**क. नव**

ख. द्वौ

ग. त्रयः

घ. सप्त

# उभयपदिधातूनां परीक्षणम्-३

१. एतेषु उभयपदिधातुर्नास्ति?

क. श्रिञ् सेवायाम्

ख. भृञ् भरणे

ग. डुपचँष् पाके

**घ. ददँ दाने**

२. एतेषु अशुद्धं रूपं चिनुत—

क. श्रयितासाथे

ख. श्रयिषीढ्वम्

ग. शिश्रय

**घ. श्रियात्**

३.भृधातोः शुद्धं रूपं चिनुत—

**क. भरिष्यति**

ख. भर्ष्यति

ग. भरिता

घ. बभरिथ

४. भृधातोर् आशीर्लिँङि किं रूपम् ?

क. भ्रीयात्

**ख. भ्रियात्**

ग. भरिषीष्ट

घ. भृयात्

५. 'भृषीष्ट' इत्यत्र ऋकारस्य गुणो न भवति तस्य समुचितं कारणं किम्?

**क. कित्वान्न गुणः**

ख. ङित्वान्न गुणः

ग. उगित्वान्न गुणः

घ. ऋदन्तत्वान्न गुणः

६. एतेषु सिचो लोपः कुत्रास्ति—

क. अशिश्रियत्

ख. अहार्षीत्

**ग. अहृत**

घ. अयाक्षीत्

७. 'उश्च' इति सूत्रं कुत्र प्रवर्त्तते?

क. तिङि

**ख. तङि**

ग. तिपि

घ. न कुत्रापि

८. 'उद्धरते' इत्यत्र को धातुः—

क. हन्

**ख. धृ ,हृ**

ग. केवल-धृ

घ. केवल-हृ

९. नी-धातोर्लिटि 'अतुसि' किं रूपम्?

क. निनियतुः

ख. निनयतुः

**ग. निन्यतुः**

घ. निन्यातुः

१०. 'समुन्नयते' इत्यत्र समुचितम् उपसर्ग-धातु-प्रत्यय-विभागं चिनुत—

क. सम्+उत्+ नी+त

ख. सम्+उद्+ नी+ति

ग. सम+उत्+ नय+त

**घ. सम्+उद्+ नी+त**

११. 'पपक्थ' इति रूपं वर्त्तते—

**क. लिँटि थलि इडभावे**

ख. लिँटि थलि इड्भावे

ग. लिँटि थसि इडभावे

घ. लिँटि थे इडभावे

१२. 'पक्षीष्ट' इति कस्य धातोः रूपम्?

**क. पच्**

ख. पक्

ग. पक्ष्

घ. पष्

१३. पच्-धातोर्लुँङि आत्मनेपदे मध्यमपुरुषस्य बहुवचने किं रूपम् ?

क. अपक्षध्वम्

ख. अपगध्वम्

**ग. अपग्ध्वम्**

घ. अपक्ध्वम्

१४. 'अभाक्ताम्' इति रूपं वर्त्तते—

**क. भज्-धातोर्लुँङि**

ख. भज्-धातोर्लँङि

ग. भज्-धातोर्लुँङि आत्मनेपदे

घ. भज्-धातोर्लृँङि

१५. यज्-धातोरयमर्थो नास्ति—

क. देवपूजा

ख. सङ्गतिकरणम्

ग. दानम्

**घ. क्रीडा**

१६. अवाक्षुः इति कस्य धातोः रूपम्?

क. वच्

**ख. वह्**

ग. उच्

घ. वद्

१७. 'ईजतुः' इत्यत्र सम्प्रसारणं केन सूत्रेण ?

क. सम्प्रसारणाच्च

ख. लिँट्यभ्यासस्योभयेषाम्

**ग. वचि-स्वपि-यजादीनां किति**

घ. न सम्प्रसारणे सम्प्रसारणम्

१८. षकार-ढकारयोर्ककारो भवति.............परे।

क. खकारे

ख. पकारे

**ग. सकारे**

घ. झलि पदान्ते च

१९. 'ईजुः' इत्यत्र सम्प्रसारणं द्वित्वात्पूर्वं कुतो न प्रवर्त्तते?

क. लिँट्यभ्यासस्योभयेषाम् इति सूत्रस्य बलवत्वात्

ख. सम्प्रसारणविधायकसूत्रस्य परत्वात्

**ग. सम्प्रसारणकार्यस्य बलवत्वात्**

घ. न सम्प्रसारणे सम्प्रसारणम् इति सूत्रस्य प्रवृतेः कारणात्

२०. झषः परस्य .............धः स्यात्।

क. षसोः

**ख. तथोः**

ग. दथोः

घ. ततो

२१. 'उवोढ' इत्यत्र यो ढकारो दृश्यते स कस्य—

क. हो ढ इत्यस्य

**ख. ष्टुना ष्टु इत्यस्य**

ग. झषस्तथोर्धोऽध इत्यस्य

घ. ढो ढे लोपः इत्यस्य

२२. एतेषु कुत्र 'सहि-वहोरोदवर्णस्य' इति सूत्रस्य प्रवृत्तिर्नास्ति—

क. अवोढम्

ख. अवोढाम्

ग. वोढा

**घ. ऊहतुः**

२३. वच्यादिषु कति धातव आगच्छन्ति—

क. दश

ख. द्वादश

**ग. एकादश**

घ. नवदश

२४. 'यष्टा' इत्यत्र जकारस्य स्थाने षकारः केन सूत्रेण—

**क. व्रश्च-भ्रस्ज्.......।**

ख. ष्टुना ष्टुः

ग. झषस्तथोर्धोऽध इत्यस्य

घ. आदेशप्रत्यययोः

२५. 'रेजे' इति रूपं वर्त्तते—

**क. राज्-धातोर्लिँटि**

ख. राज्-धातोर्लोँटि

ग. रज्-धातोर्लिँटि

घ. रज्-धातोर्लोँटि